# वाङ्मयी



(एकादशद्वादशकक्षाभ्यां संस्कृतपाठ्यपुस्तकम्)

सम्पादकः – प्रो० व्रजमोहन चतुर्वेदी
उपसम्पादकः – डा० विशालप्रसाद त्रिपाठी
सहयोगिनः – श्री जी० लाल चतुर्वेदी
श्रीमती फूलमती गुप्ता
श्रीमती कृष्णा दत्त

केन्द्रीय माध्यमिक शिक्षा बोर्ड
17 बी इन्द्रप्रस्थ एस्टेट, नई दिल्ली – 110002

प्रथम संस्करण जुलाई, 1984-85—20,000 प्रतियाँ
द्वितीय संस्करण, फरवरी, 1986—12,000 प्रतियाँ
तृतीय संस्करण, जून, 1988—4,000 प्रतियाँ
चतुर्थ संस्करण, दिसम्बर, 1988—7,000 प्रतियाँ
पंचम संस्करण, मार्च, 1991—8,000 प्रतियाँ
षष्ठ संस्करण, जून, 1991—5,000 प्रतियाँ
सप्तम् संस्करण, दिसम्बर 1991—11,000 प्रतियाँ

| | |
|---|---|
| अष्टम संस्करण, 1993 | 3,000 प्रतियां |
| नवम् संस्करण, 1993 | 2,000 प्रतियां |
| दशम् संस्करण, जनवरी, 1994 | 5,000 प्रतियां |
| एकादशः संस्करण, नवम्वर, 1995 | 5,000 प्रतियां |



मूल्यः Rs. 9.00

प्रकाशकः एस० गोपाल सचिव, केन्द्रीय माध्यमिक शिक्षा बोर्ड
नई दिल्ली - 110002.

मुद्रक : विजयलक्ष्मी प्रिंटिंग वर्क्स, के-6, लक्ष्मी नगर, दिल्ली-110 092

# पुरोवाक्

केन्द्रीय-माध्यमिक-शिक्षा-परिषदुच्चतरमाध्यमिकस्तरे 'इलेक्टिव' इति 'कोर' इति च नाम्ना संस्कृतस्य द्विविधं पाठ्यक्रमं संचालयति । तत्र कोरपाठ्यक्रमे सम्प्रति प्रचलत् पुस्तकं 1972 तमे वर्षे निर्धारितमासीत् ।

विगतकतिपयवर्षेभ्यो विद्यालयेषु कार्यरतानामध्यापकानामाग्रहो गोष्ठीषु प्रकटितो यत् संस्कृतसुधायाः स्थानेऽपरं किमपि पुस्तकं निर्मापणीयं यत् समयानुसारं समीचीनै र्विशेषतो रुचिकरैः पाठैः संवलितमाधुनिकरीत्या च सम्पादितं स्यात् । तदनुरूपमेव नूतनंकोर-संस्कृतपाठ्यपुस्तकं संस्कृतसमितिसदस्यै र्निर्मापयितुं परिषदा संकल्पितं यस्य फलभूतेयं 'वाङ्मयी' ति नाम्नी पुस्तिका । सा च ज्ञानस्य स्रोतस्य वाग्देव्या सुतरां संवलितेति सदर्थं द्योतयति । पुस्तकस्यास्य प्रस्तावितं रूपं संस्कृताध्यापकानां पुरतः समुपस्थाप्य तत्परामर्शानुसारं च यथावत् परिष्कृत्य सम्पादनं विहितं तच्च समेषामेव छात्राध्यापकानां मनस्तोषाय स्यादिति मन्ये ।

प्रो० व्रजमोहन चतुर्वेद महोदयाः संस्कृतसमितेरध्यक्षाः नूतनस्यास्य पुस्तकस्य निर्माणे आद्योपान्तं संलग्ना आसन् । कार्येस्मिन् संस्कृतसमितिसदस्यैः विशेषतो डा० विशालप्रसाद त्रिपाठिना तेषां योग्यतया सहयोगः कृतः । पुस्तकस्यास्योत्तमोत्तमरूपेण सम्पादनार्थमहं सर्वानेव संस्कृतपाठ्यक्रमसमितिसदस्यान् विशेषतः प्रो० चतुर्वेदमहोदयान् प्रति कृतज्ञता+मात्मनः प्रकटयामि । परिषदः शैक्षणिक शाखायां कार्य–निरतानामधिकारिणां तत्सहयोगिनां चा कार्यं प्रशंसन्नहं पूर्णं प्रमोदमावहामि । सर्वथा ह्यभिनन्दनीया तेषां पाठ्यपुस्तकनिर्माण-योजनायामस्यां निष्ठा ।

परिषदियं सर्वानेव तानध्यापकान् प्रति स्वकीयमाभारं प्रदर्शयति यैः पुस्तकमिदमधिकृत्याहूतासु विचारगोष्ठीषु भागो गृहीतः । एवं प्रस्तुतेषु पाठ्यपुस्तकेषु परिष्कारविषयकपरामर्शाणां परिषदियं सर्वदा स्वागतं करोति । मन्यते च काले-काले परिष्कृतानि पुस्तकानि सर्वथोपयोगीनि भवन्तीति शम् ।

हरभजन सिंह सिंघा

अध्यक्षः
केन्द्रीय माध्यमिक शिक्षापरिषदः
नवदेहली

# प्रस्तावना

केन्द्रीय-माध्यमिक-परिषदा संचालितायाः सीनियर-स्कूल-सर्टीफिकेट परीक्षायाः कोरपाठ्यक्रमान्तर्गतस्य संस्कृतविषयस्य कृते संस्कृतसुधा पुस्तकस्य स्थाने नियोजयितुं प्रस्तुतमिदं संकलनं तत्कक्षाध्यापकैः संस्कृतानुरागिभिश्च भूयो भूयः कांक्षितमासीत् । पुस्तकेऽस्मिन् वैदिक वाङ्मयादारभ्य जयदेवकृतगीतगोविन्दपर्यन्तस्य निखिलस्यापि संस्कृत वाङ्मस्य विविधाः धाराः प्रतिनिधीयन्ते । गद्य-पद्य-चम्पू-मुक्तकप्रबन्धात्मकेभ्यश्च काव्येभ्यो नाट्यकृतिभ्यश्चात्रांशाः संकलिताः । रामायणं, महाभारतं, चरकसंहिता, भासनाटकचक्रमभिज्ञानशकुन्तलं रघुवंशं, कादम्बरीहर्षचरिते, उत्तररामचरितं गीतगोविन्दमिति पाठ्यस्रोतांसि प्रसिद्धानि समुपयुक्तानि ।

पुस्तकेऽस्मिन् चत्वारो नाट्यांशाश्चत्वार एव काव्यांशास्त्रयो गद्यांशाः चम्पू काव्यस्यैकांशो वैदिकवाङ्मयस्यैकस्मिन् पाठे सप्त मंत्राः संकलिताः सन्ति । चरकसंहितायाः गद्यपद्यात्मकोंऽशः ऋतुचर्येति नाम्ना संगृहीतः ।

पुस्तकेऽस्मिन् छात्राणां बोधस्तरंः सुतरां विचार्य तदनुरूपमेवांशानां ग्रहणं कृतम् । केचन पाठास्त्ववश्यमेव कलेवरदृष्ट्या दीर्घाः प्रतिभान्ति । परं तु सरलतया बोधगम्यतया समानरूपतया च न ते दीर्घाः प्रतीयन्ते । विविधता स्तरानुरूपता रूचिरता चास्य वैशिष्ट्यं संकलनस्य । अभ्यासानामत्र प्रस्तुतिः प्रयोजनानुरूपं कृता । संभावितानां प्रश्नानामूहापोहं विधाय छात्राणां कृतेऽत्रोत्तरप्रदानसरणिरपि निर्दिष्टा । शाब्दबोध-नाम्ना सर्वेषामेव प्रायेण प्रमुखपदानां व्युत्पत्तिरर्थश्च समुचितरूपेणात्र प्रस्तुताः सन्ति ।

नूतनस्यास्य संकलनस्य वाङ्मयीति नाम पुरातनमपि सर्वथाधुनिकमाकर्षकं चास्ति । मन्ये, चैतदवश्यमेव विदुषामध्यापकानां छात्राणां च ज्ञानग्रहणोन्मुखानां सन्तोषं सम्यगावक्ष्यतीति ।

व्रजमोहनश्चतुर्वेदी

# पाठानुक्रमः

## (प्रथमो भागः)



## ( द्वितीयो भागः)

# अमृतस्य पन्थाः

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम् ॥1॥

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥2॥

सर्वतः पाणिपादं तत् सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥3॥

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं महत् ॥4॥

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥5॥

ततः परंब्रह्मपरं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्ठितारमीशं तं ज्ञात्वाऽमृता भवन्ति ॥6॥

महान् प्रभुर्वै पुरुषः सत्वस्यैष प्रवर्तकः ।
सुनिर्मलामिमां प्राप्तिमीशानोज्योतिरव्ययः ॥ 7 ॥

# अभ्यासः

1. सन्धि–परिचयः–
   (अ) उतामृतत्वस्येशानः — उत + अमृतत्वस्य + ईशानः ।
   (इ) श्रुतिमल्लोके — श्रुतिमत् + लोके ।
   (उ) वेदाहम् — वेद + अहम् ।
   (ऋ) विश्वस्यैकम् — विश्वस्य + एकम् ।
   (लृ) ज्ञात्वामृताः — ज्ञात्वा + अमृताः ।
   (ए) ज्योतिरव्ययः — ज्योतिः + अव्ययः ।

2. विग्रहं विधाय समासनामानि लिखत —

| | |
|---|---|
| सहस्रशीर्षाः | दशाङ्गुलम् |
| सर्वेन्द्रियगुणाभासम् | पाणिपादम् |
| सर्वेन्द्रियविवर्जितम् | अतिमृत्युम् । |
| यथानिकायम् | सर्वभूतेषु । |

3. अर्थो लेखनीयः—

| | |
|---|---|
| सहस्राक्षः | विश्वतः |
| भव्यम् | शरणम् |
| अयनाय | वृत्वा |
| आवृत्य | अतिरोहति |

4. अधोलिखितानां वाक्यांशानामाशयं स्पष्टीकुरुत —
अत्यतिष्ठद्दशाङ्गुलम्, यदन्नेनातिरोहति,
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्, नान्यः पन्था विद्यतेऽयनायः;
सुनिर्मलामिमां प्राप्तिमीशानः ।

5. प्रश्नाः — संस्कृतभाषया उत्तरं देयम् —
   (अ) भूमिं वृत्वा कोऽत्यतिष्ठत् ?
   (इ) सर्वस्य महत् शरणं किमस्ति ?

(उ) पुरुषः किम् अत्यतिष्ठत् ?
(ऋ) पुरुषः कैः विवर्जितः ?
(लृ) पुरुषः सर्वस्य किं किमस्ति ?
(ए) तं विदित्वा जनः किम् अत्येति ?
(ओ) तं ज्ञात्वा जनाः किं भवन्ति ?
(ऐ) पुरुषः कस्य प्रवर्तकः कां च ईशानः ?

द्वितीयः पाठः

# जनमेजयस्य कृत्या

जनमेजयः पारीक्षितः सहभ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते । तेषु तत्सत्रमुपासीनेषु आगच्छत् सारमेयः । जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणः स मातुः समीपमुपागच्छत् । तं माता रोरूयमाणमुवाच — किं रोदिषि, केनासि अभिहत इति । स एवमुक्तो मातरं प्रत्युवाच — जनमेजयस्य भ्रातृभिरभिहतोऽस्मि इति । तं माता प्रत्युवाच — व्यक्तं त्वया तत्रापराद्धं येनास्यभिहतः इति । स तां पुनरुवाच — नापराध्यामि, किंचिन्नावेक्षे, हवींषि नावलिह इति ।

तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्ता तत्सत्रमुपागच्छद् यत्र जनमेजयः दीर्घसत्रम् उपास्ते। स च तया क्रुद्धया तत्रोक्तः — अयं मे पुत्रो न किंचित् अपराध्यति, नावेक्षते, हवींषि नावलेढि, किमर्थमयं भ्रातृभिस्ते अभिहत इति ? न किंचिदुक्तवन्तस्ते । सा तानुवाच — यस्मादयम् अभिहतोऽनपकारी तस्माददृष्टं त्वां भयमागमिष्यतीति ।

जनमेजयः एवमुक्तो सरमया देवशुन्या भृशं संभ्रान्तो विषण्णश्चासीत् । स तस्मिन् सत्रे समाप्ते हस्तिनापुरं प्रत्येत्य पुरोहितम् अनुरूपमन्विष्यमाणः परं यत्नमकरोत् यो मे पापकृत्यां शमयेदिति ।

स कदाचिन्मृगयां गतो जनमेजयः आश्रमं कंचन अपश्यत् । तत्र कश्चिद् ऋषिः आसांचक्रे । तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम। स नमस्कृत्य तमृषिमुवाच भगवन् अयं तव पुत्रो मम पुरोहितोऽस्त्विति । स प्रत्युवाच — भो जनमेजय ! पुत्रोऽयं मम सर्प्यां जातो महातपस्वी स्वाध्यायसंपन्नः समर्थो भवतः सर्वाः पापकृत्याः शमयितुमिति ।

जनमेजयः पुरोहितं तमुपादाय भ्रातृनुवाच मयायं वृत उपाध्यायो यदयं ब्रूयात् तत्कार्यं भवद्भिरिति । तेनेवमुक्ता भ्रातरस्तस्य तथा चक्रुः ।

## अभ्यासः

1 अधोलिखितानि पदानि अर्थनिर्देशपूर्वकं स्वरचितसंस्कृतवाक्येषु प्रयुज्यन्ताम् —

सारमेयः अभिहतः अपराध्यामि
सम्भ्रान्तः विषण्णः शमयितुम्
रोरूयमाणः ।

2. संधिच्छेदः क्रियताम् —

भ्रातृभिरभिहतः नापराध्यामि किंचिन्नावेक्षे
प्रत्येत्य प्रत्युवाच ।

3. समासानां नामानि निर्दिश्य विग्रहः कार्यः —

कुरुक्षेत्रे पुत्रदुःखार्ता देवशुन्या
पापकृत्याः दीर्घसत्रम् महातपस्वी

4. पदपरिचयो देयः —

आगच्छत् अभिहतः विषण्णः
प्रत्येत्य नमस्कृत्य शमयितुम ।

5. अधोलिखितानां प्रश्नानां उत्तराणि संस्कृतेन देयानि —

(अ) कस्मात् ग्रन्थात् संगृहीतोऽयं गद्यांशः ?
(इ) जनमेजयः कः आसीत् कैश्च सह सः दीर्घसत्रमुपास्ते ?
(उ) कस्मात् कारणात् सारमेयः अभिहतः ?
(ऋ) जनमेजयस्य भ्रातृभिः अभिहतः सारमेयः कुत्र अगच्छत् ?

(लृ) दुःखार्ता सरमा जनमेजयं किमवदत् ?
(ए) सरमायाः आक्षेपं श्रुत्वा जनमेजयस्य कीदृशी दशाऽभवत् ?
(ओ) सः ततः कुत्रागच्छत् स्वपापकृत्यायाः शमनाय च किम् यत्नमकरोत् ?
(ऐ) सोमश्रवा कः आसीत्, जनमेजयेन सः केन रूपेण वृतः ?
(औ) तं स्वगृहमानीय जनमेजयः स्वभातृन् किमादिशत् ?

6. एतेषां वाक्यानां अर्थं लिखत —
(अ) तेषु . . . . . . . . . . . सारमेयः ।
(इ) व्यक्तं . . . . . . . . . . . येनास्यभिहत इति ।
(उ) नापराध्यामि . . . . . . . . . . . नावलिह इति ।
(ऋ) यस्मादयम् . . . . . . . . . . . भयमामिष्यतीति ।
(लृ) पुत्रोऽयं . . . . . . . . . . . शमयितुमिति ।

7. संस्कृतेन अनुवादो विधेयः —
(अ) ज़नमेजय कुरुक्षेत्र में अपने भाइयों के साथ यज्ञ कर रहा था ।
(इ) उसी समय वहां एक कुत्ता आया ।
(उ) जनमेजय के भाइयों ने उसकी पिटाई कर दी ।
(ऋ) वह रोता-चिल्लाता हुआ अपनी मां सरमा के पास पहुंचा ।
(लृ) मां ने कहा, तूने कोई अपराध अवश्य किया होगा ।
(ए) उसने कहा, मैंने कुछ भी नहीं किया ।
(ओ) इस पर उसकी मां को बड़ा क्रोध आया और उसने जनमेजय से शिकायत की ।
(ऐ) इससे जनमेजय बड़ा दुःखी हुआ ।
(औ) उसने सोमश्रवा को अपना पुरोहित बनाया और उनकी सहायता से अपने भाइयों द्वारा किये गए पाप का प्रायश्चित किया ।

# आर्यावर्तः

अस्ति समस्तविश्वंभराललामभूतः, समानः सेव्यतया नाकलोकस्य, ग्राम्यकविकथाबन्ध इव नीरसस्य मनोहरः, भीम इव भारतालंकारभूतः, अग्रणीः सर्वदेशानां, भगीरथभूपालकीर्तिपताकया स्वर्गसोपानतरङ्गया गङ्गया पुण्यसलिलैः प्लावितः, सारः सकलसंसारचक्रस्य, शरण्यः पुण्यकारिणाम्, आरामो रमणीय-कदलीवनस्य, धाम धर्मस्य, आस्पदः सर्वसंपदाम्, आश्रयः श्रेयसाम्, आकरः साधु-व्यवहाररत्नानाम्, आचार्यभवनमार्यमर्यादोपदेशानाम्, आर्यावर्तो नाम देशः ।

यस्मिन् अनवरतधर्मकर्मोपदेशेन शान्तसमस्तव्याधयः पुरुषायुषजीविन्यः सकलसंसारसुखभाजः प्रजाः । यत्र चतुरगोपशोभिताः संग्रामा इव ग्रामाः । अपि च —

भवन्ति फाल्गुने मासि वृक्षशाखा विपल्लवाः ।<br>
जायन्ते न तु लोकस्य कदापि च विपल्लवाः ॥

यत्र च सौराज्यरञ्जितमनसः समुंपहसन्ति स्वर्गवासिनं जनं जनाः । यत्र गृहे गौर्यः स्त्रियः, महेश्वरो लोकः, पदे पदे धनदाः सन्ति लोकपालाः । केवलं न सुराधिपो राजा । न च विनायकः कश्चित् ।

यत्र च गुरुव्यतिक्रमं नक्षत्रराशयः, मात्राकलहं लेखशालिकाः, मित्रोदयद्वेषमुलूकाः, अपत्यत्यागं कोकिलाः, बन्धुजीवविघातं ग्रीष्मदिवसाः कुर्वन्ति न जनाः । किं बहुना —

देशः पुण्यतमोद्देशः कस्यासौ न प्रियो भवेत् ।<br>
युक्तोऽनुक्रोशसंपन्नैर्यो जनैरिव योजनैः ॥

## अभ्यासः

1. अधोलिखितशब्देषु विग्रहं कृत्वा समासनाम लिखत —
   साधुव्यवहाररत्नानाम्
   स्वर्गसोपानतरङ्गया
   वृक्षशाखाः विपल्लवाः
   स्वर्गवासिनम्
   अपत्यत्यागम् ।

2. स्वरचितसंस्कृतवाक्येषु पदानि प्रयोज्यानि —
   अग्रणीः
   आस्पदम्
   आकरः
   गौर्यः,
   गुरुव्यतिक्रमम्
   बन्धुजीवविघातम्
   योजनैः ।

3. पदपरिचयः प्रदेयः —
   प्लावितः
   आश्रयः
   जायन्ते
   युक्तः
   सन्ति
   श्रेयसाम् ।

4. प्रश्नाः — संस्कृतभाषया उत्तरं देयम् ।
   (अ) को देशो विश्वंभराललामभूतो विराजते ?
   (इ) ग्रामाः संग्रामाश्च किं भूताः ?
   (उ) जनाः स्वर्गवासिनं जनं किमर्थम् उपहसन्ति ?
   (ऋ) मित्रोदयेन के द्विषन्ति ?
   (लृ) अपत्यत्यागं के कुर्वन्ति ?

5. अधोलिखितानां पदानां श्लिष्टा अर्था लेख्याः —
   भारतालङ्कारभूतः
   चतुरगोपशोभिताः
   विपल्लवाः
   गौर्यः
   महेश्वरः
   विनायकः
   गुरुव्यतिक्रमम्
   मात्राकलहः
   मित्रोदयः
   बन्धुजीवविघातम् ।

6. आर्यावर्तस्य महिमानं स्वभाषया वर्णयत ।

7. काव्यस्य मुख्यतः कति भेदाः । पाठोऽयं कस्मिन् प्रकारे समायाति ? तस्य को विशेषः ।

# रामायणस्याविर्भावः

तपःस्वाध्यायनिरतो वाल्मीकिर्वाग्विदांवरः ।
विचचार वनं पश्यन्नेकदा विपुलं महत् ॥1॥

तस्याभ्याशे तु मिथुनं चरन्तमनपायिनम् ।
ददर्श भगवांस्तत्र क्रौञ्चयोश्चारुनिस्वनम् ॥2॥

तस्मात्तु मिथुनादेकं पुमांसं पापनिश्चयः ।
जघान वैरनिलयो निषादस्तस्य पश्यतः ॥3॥

तथाविधं द्विजं दृष्ट्वा निषादेन निपातितम् ।
निशम्य रुदतीं क्रौञ्चीमिदं वचनमब्रवीत् ॥4॥

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥5॥

समाक्षरैश्चतुर्भिर्यः पादैर्गीतो महर्षिणा ।
सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः ॥6॥

तस्य बुद्धिरियं जाता महर्षेर्भावितात्मनः ।
कृत्स्नं रामायणं काव्यमीदृशैः करवाण्यहम् ॥7॥

चतुर्विंशत् सहस्राणि श्लोकानामुक्तवानृषिः ।
तथा सर्गशतान् पञ्च षट्काण्डानि तथोत्तरम् ॥8॥

कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ ।
कृत्वा तु तन्महाप्राज्ञस्तावग्राहयत प्रभुः ॥9॥

ऋषीणां च द्विजातीनां साधूनां च समागमे ।
यथोपदेशं तत्त्वज्ञौ जगतुस्तौ समाहितौ ॥10॥

प्रशस्यमानौ सर्वत्र कदाचित्तत्र गायकौ ।
रथ्यासु राजमार्गेषु ददर्श भरताग्रजः ॥11॥

स्ववेश्म चानीय ततो भ्रातरौ सकुशीलवौ ।
उवाच लक्ष्मणं रामः शत्रुघ्नं भरतं तथा ॥12॥

श्रूयतामेतदाख्यानमनयोर्देववर्चसोः ।
ह्लादयत् सर्वगात्राणि मनांसि हृदयानि च ॥13॥

ततस्तु तौ रामवचः प्रचोदितावगायतां मार्गविधानसम्पदा ।
स चापि रामः परिषद्गतः शनैर्बुभूषया सक्तमना बभूव ॥14॥

## अभ्यासः

1. सन्धि परिचयः —
   - (अ) रामायणस्याविर्भावः — रामायणस्य+आविर्भावः
   - (इ) वाल्मीकिर्वाग्विदाम् — वाल्मीकिः+वाक्+विदाम्
   - (उ) भगवांस्तत्र — भगवान्+तत्र
   - (ऋ) निषादस्तस्य — निषादः+तस्य
   - (लृ) समाक्षरैश्चतुर्भिर्यत् — समाक्षरैः+चतुर्भिः+यत्
   - (ए) बुद्धिरियम् — बुद्धिः+इयम्
   - (ओ) करवाण्यहम् — करवाणि+अहम्
   - (ऐ) तावग्राहयत — तौ+अग्राहयत
   - (औ) प्रचोदितावगायताम् — प्रचोदितौ+अगायताम्

2. समास परिचयः—

(अ) तपः स्वाध्यायनिरतः — तपश्च स्वाध्यायश्च इति तपःस्वाध्यायौ, —द्वन्द्वः समासः, तयोः निरतः — सप्तमी तत्पुरुषः ।

(इ) पापनिश्चयः — पापमेव निश्चयः यस्य सः — बहुव्रीहि समासः ।

(उ) क्रौञ्चमिथुनात् — क्रौञ्चयोः मिथुनम्, तस्मात् — षष्ठी तत्पुरुषः

(ऋ) देववर्चसोः — देवस्य वर्चः (तेजः) इव वर्चः ययोस्तयोः — बहुव्रीहि समासः

3. सन्धिच्छेदः कर्तव्यः —

पश्यन्नेकदा; तस्याभ्याशे;
क्रौञ्चयोश्चारुनिःस्वनम्; मिथुनादकम्;
पादैर्गीतः; सोऽनुव्याहरणाद्;
महर्षेर्भावितात्मनः; ततस्तु,
शनैर्बुभूषया ।

4. विग्रहं कृत्वा समासानां नामानि लिखत —

चारुनिःस्वनम्; वैरनिलयः;
काममोहितम्; महाप्राज्ञ;
राजपुत्रौ; यथोपदेशम्;
भरताग्रजः ।

5. पदपरिचयो दीयताम् —

विचचार; पश्यन्;
पुमांसम्; निशम्य;
अगमः; गीतः;
कृत्स्नम्; उक्तवान्;
समाहितौ; प्रशस्यमानो;
श्रूयताम्; अभ्याशे;
यशस्विनौ ।

6. अधोलिखितानामाशयं स्पष्टीकुरुत —

(अ) वाग्विदावरः

(इ) अनपायिनम्
(उ) वैरनिलयः
(ऋ) मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
(लृ) सोऽनुव्याहरणाद्भूयः शोकः श्लोकत्वमागतः ।
(ए) भावितात्मनः ।
(ओ) ह्लादयत् सर्वगात्राणि मनांसि हृदयानि च ।
(ऐ) मार्गविधानसम्पदा ।

7. अधोलिखितानां प्रश्नानां संस्कृतभाषया उत्तराणि लिखत —
(अ) 'रामायणम्' कस्य कृतिः ?
(इ) वाल्मीकिः केन नाम्ना प्रसिद्धिं यातः ?
(उ) कः श्लोकत्वम् आगतः ?
(ऋ) रामायणे कति श्लोकाः कति च सर्गाः सन्ति ?
(लृ) कुशलवौ केषां समागमे रामायणम् जगतुः ?
(ए) तदाख्यानं कानि कानि आह्लादयत् ?

8. रामायणस्य काण्डानां नामानि लिखत ।

# मध्यमव्यायोगः (क)

सूत्रधारः – एवमार्यमिश्रान् विज्ञापयामि । अये किंनु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग ! पश्यामि
(नेपथ्ये) भोस्तात को नु खल्वेषः ?

सूत्रधारः – भवतु विज्ञातम् । एष खलु पाण्डवमध्यमस्यात्मजो हिडिम्बारणिसंभूतो घटोत्कचः ब्राह्मणकुलं वित्रासयति ।
(ततः प्रविशति सुतत्रयकलत्रपरिवृतो ब्राह्मणः पृष्ठतो घटोत्कचश्च)

सर्वेसुताः – भोस्तात को नु खल्वेष अस्मान् पीडयति ।
वज्रवातोऽचलेन्द्राणां, श्येनः सर्वपतत्रिणाम् ।
मृगेन्द्रो मृगसंघानां, मृत्युः पुरुषविग्रहः ॥

ब्राह्मणी – आर्य! क एषोऽस्मान् संतापयति ।

घटोत्कचः – भो ब्राह्मण ! तिष्ठ तिष्ठ ।

वृद्धः – ब्राह्मणि, न भेतव्यम् । पुत्रकाः, न भेतव्यम् ।

घटोत्कचः – भोः कष्टम् —
जानामि सर्वत्र सदा च नाम द्विजोत्तमाः पूज्यतमाः पृथिव्याम् ।
अकार्यमेतच्च मयाद्य कार्यं मातुर्नियोगादपनीयखेदम् ॥

ब्राह्मणी – किमिदानीम् आर्यो मध्यस्थवर्ण इव दृश्यते ।

वृद्धः — किं करिष्यामि मन्दभाग्यः ।

ब्राह्मणी — ननु विक्रोशामः ।

प्रथमः (पुत्रः) — भवति ! कस्य वयं विक्रोशामः ?

वृद्धः — न भेतव्यं, न भेतव्यम् । मनस्विजननिवासयोग्यमिदं वनम् । मन्ये नातिदूरेण पाण्डवाश्रमेण भवितव्यम् । पाण्डवास्तु —

युद्धप्रियाश्च शरणागतवत्सलाश्च
दीनेषु पक्षपतिताः कृतसाहसाश्च ।
एवं विधप्रतिभयाकृतिचेष्टितानां
दण्डं यथार्हमिह धारयितुं समर्थाः ॥3॥

भवतु । व्यपश्रयिष्ये तावदेनम् ।

(घटोत्कचं प्रति) भो भोः ! पुरुष ! अस्त्यस्माकं मोक्षः ।

घटोत्कचः — मोक्षोऽस्ति समयतः ।

वृद्धः — कः समयः ?

घटोत्कचः — अस्ति मे तत्रभवती जननी तयाहमाज्ञप्तः । पुत्र ! ममोपवासनिसर्गार्थं कश्चिन्मानुषः आनेतव्यः । ततो मया आसादितो भवान् ।

पत्न्या चारित्रशालिन्या द्विपुत्रो मोक्षमिच्छसि ।
बलाबलं परिज्ञाय पुत्रमेकं विसर्जय ॥4॥

वृद्धः — हं भो राक्षसापसद !

ब्राह्मणः श्रुतवान् वृद्धः पुत्रं शीलगुणान्वितम् ।
पुरुषादस्य दत्वाहं कथं निर्वृतिमाप्नुयाम् ॥5॥

घटोत्कचः — यथार्थितो द्विजश्रेष्ठ पुत्रमेकं न मुञ्चसि ।
सकुटुम्बः क्षणेनैव विनाशमुपयास्यसि ॥6॥

वृद्धः — मम तु एष निश्चयः—
कृतकृत्यं शरीरं मे परिणामेन जर्जरम् ।
राक्षसाग्नौ सुतापेक्षी होष्यामि विधिसंस्कृतम् ॥

ब्राह्मणी — आर्य ! मा मैवम् । पतिमात्रधर्मिणी पतिव्रता नाम ।
गृहीतफलेनैतेन शरीरेण आर्यं कुलं च रक्षितुमिच्छामि।

घटोत्कचः — भवति ! न खलु स्त्री जनोऽभिमतस्त्रभवत्या ।

वृद्धः — अनुगमिष्यामि भवन्तमहम् ।

घटोत्कचः — आः वृद्धस्त्वमपसर ।

प्रथमः — भोस्तात ! ब्रवीमि खलु तावत् किंचित् —
मम प्राणैर्गुरुप्राणानिच्छामि परिरक्षितुम् ।
रक्षणार्थं कुलस्यास्य मोक्तुमर्हति मां भवान् ॥8॥

द्वितीयः — आर्य ! मा मैवम् —
ज्येष्ठः श्रेष्ठः कुले लोके पितृणां च सुसंप्रियः ।
ततोऽहमेव यास्यामि गुरुवृत्तिमनुस्मरन् ॥9॥

तृतीयः — आर्यौ ! मा मैवम् —
ज्येष्ठो भ्राता पितृसमः कथितो ब्रह्मवादिभिः ।
ततोऽहं कर्तुमस्म्यर्हो गुरूणां प्राणरक्षणम् ॥10॥

प्रथमः — वत्सौ ! मा मैवम् —
आपदं हि पिता प्राप्तो ज्येष्ठपुत्रेण तारयति ।
ततोऽहमेव यास्यामि गुरूणां प्राणरक्षणात् ॥11॥

वृद्धः — ज्येष्ठम् इष्टतमं न शक्नोमि परित्यक्तुम् ।

ब्राह्मणी — यथार्यो ज्येष्ठमिच्छति तथाहं कनिष्ठमिच्छामि ।

द्वितीयः — पित्रोरनिष्टः कस्येदानीं प्रियः ?

घटोत्कचः — अहं प्रीतोऽस्मि । शीघ्रमागच्छ ।

द्वितीयः — धन्योऽस्मि यद् गुरुप्राणाः स्वैः प्राणैः परिरक्षिताः।
बन्धुस्नेहाद्धि महतः कायस्नेहस्तु दुर्लभः ॥12॥
भोः पुरुष ! किंचिद् ब्रवीमि ।

घटोत्कचः — ब्रूहि, ब्रूहि शीघ्रम् ।

द्वितीयः — एतस्मिन् वनान्तरे जलाशय इव दृश्यते ।
तत्र पिपासाप्रतीकारं करिष्यामि ।

घटोत्कचः — दृढव्यवसायिन् । गम्यताम् ।
अतिक्रामति मातुराहारवेला । शीघ्रमागच्छ ।

द्वितीयः — भोस्तात ! एष गच्छामि (निष्क्रान्तः)

वृद्धः — हा हा परिमुषिताः स्मो भोः परिमुषिताः स्मः —
यस्त्रिशृङ्गो मम त्वासीन्मनोज्ञो वंशपर्वतः ।
स मध्यशृङ्गभङ्गेन मनस्तपति मे भृशम् ॥

(इति निष्क्रान्ताः सर्वे)

## अभ्यासः

1. संधि परिचयः—
   (अ) भोस्तात — भोः+तात ।
   (इ) खल्वेषः — खलु+एषः ।
   (उ) मातुर्नियोगादपनीयखेदम् — मातुः+नियोगात्+अपनीयखेदम् ।
   (ऋ) अस्त्यस्माकम् — अस्ति+अस्माकम् ।
   (लृ) कश्चिन्मानुषः — कश्चित्+मानुषः ।
   (ए) क्षणेनैव — क्षणेन+एव ।
   (ओ) गृहीतफलेनैतेन — गृहीतफलेन+एतेन ।
   (ऐ) जनोऽभिमतस्तत्रभवत्या — जनः+अभिमतः+तत्रभवत्या ।
   (ओ) प्राणैर्गुरुप्राणानिच्छामि — प्राणैः+गुरुप्राणान्+इच्छामि ।

2. समासपरिचयः —

(अ) सुतत्रयकलत्रपरिवृतो — सुतानां त्रयं सुतत्रयं तेन कलत्रेण च परिवृतः, तत्पुरुषः।

(इ) युद्धप्रियाः — युद्धम् प्रियम् येषां ते, बहुव्रीहिः।

(उ) गृहीतफलेन — गृहीतं फलं यस्य तत्, बहुव्रीहिः।

(ऋ) वनान्तरे — वनस्य अन्तरे — तत्पुरुषः।

3. पदपरिचयो दीयताम् —

| | |
|---|---|
| पतत्रिणाम् | भेतव्यम् |
| विक्रोशामः | धारयितुम् |
| होष्यामि | परिरक्षितुम् |
| अनुस्मरन् | निष्क्रान्तः । |

4. अधोलिखितानां पदानां अर्थान् लिखित्वा स्वसंस्कृतवाक्येषु प्रयोगः कर्तव्यः—

| | | |
|---|---|---|
| श्येनः | पूज्यतमाः | आज्ञप्तः |
| मनस्विजनः | कृतसाहसाः | बन्धुस्नेहः । |

5. अधोलिखितानां वाक्यानाम् आशयं विशदीकुरुत —

(अ) द्विजोत्तमाः पूज्यतमाः पृथिव्याम् ।

(इ) बलाबलं परिज्ञाय पुत्रमेकं विसर्जयं ।

(उ) गृहीतफलेनैतेन शरीरेण आर्यकुलं च रक्षितुमिच्छामि ।

(ऋ) स मध्यशृङ्गभङ्गेन मनस्तपति मे भृशम् ।

(लृ) बन्धुस्नेहाद्धि महतः कायस्नेहस्तु दुर्लभः ।

6. प्रश्नाः —

(अ) मध्यमव्यायोगस्य को रचयिता ?

(इ) सूत्रधारः कदा प्रविशति ?

(उ) घटोत्कचस्य कौ पितरौ ?

(ऋ) घटोत्कचः कम् वित्रासयति स्म ?

(लृ) ब्राह्मणस्य कति सुताः आसन् ?

(ए) ज्येष्ठः पुत्रः कस्य प्रियो भवति ?

(ओ) कनिष्ठपुत्रविषये ब्राह्मणी किम् अवदत् ?
(ऐ) मध्यमस्य का गतिः अभवत् ?
(औ) अस्मिन् पाठे मध्यशृङ्गशब्दः कस्य बोधकः ?

7. कोष्ठान्तर्गतैः पदैः अपेक्षितेन पदेन सह संयोज्य वाक्यानि रचयत —
(अ) मनस्विजननिवासयोग्यमिदं — (गृहम्/वनम्) ।
(इ) ममोपवासनिसर्गार्थं कश्चिद् (मानुषः/राक्षसः) आनेतव्यः ।
(उ) पुरुषादस्य दत्वाहं कथं (निर्वृतिं/सद्गतिं) आप्नुयाम् ?
(ऋ) बलाबलं परिज्ञाय पुत्रमेकं (नियोजय/विसर्जय) ।
(लृ) आपदं हि पिता प्राप्तः (ज्येष्ठपुत्रेण/कनिष्ठपुत्रेण तारयति ।

षष्ठः पाठः

# मध्यमव्यायोगः (ख)

(ततः प्रविशति घटोत्कचः)

घटोत्कचः — चिरायते खलु ब्राह्मणवटुः । अतिक्रामति मातुराहारवेला । किन्नु खलु करिष्ये । भवतु दृष्टम् । भो ब्राह्मण ! आहूयता तवपुत्रः ।

वृद्धः — आः, अतिराक्षसं खलु ते वचनम् ।

घटोत्कचः — (कथं रुष्यति ?)मर्षयतु भवान् भर्षयतु । अयं मे प्रकृतिदोषः ।

वृद्धः — एतदपि न शक्यं श्रोतुम् ।

घटोत्कचः — युक्तम् । भोः । ब्राह्मणकुमार ! किं नामा ते भ्राता ।

प्रथमः — तपस्वी मध्यमः ।

घटोत्कचः — मध्यम इति सदृशमस्य । अहमेवाह्वयामि । भो मध्यम ! मध्यम ! शीघ्रमागच्छ ।

(ततः प्रविशति भीमसेनः)

भीमः — कस्यायं स्वरः ? भोः को नु खलु एतस्मिन् वनान्तरे मम व्यायामविघ्नमुत्पाद्य मध्यम इति मां शब्दापयति । भवतु पश्यामस्तावत् । (परिक्रम्य अवलोक्य सविस्मयम्) अहो दर्शनीयोऽयं पुरुषः ।

घटोत्कचः – भो भो मध्यम ! शीघ्रमागच्छ ।

भीमः – भोः प्राप्तोस्मि ।

घटोत्कचः – (आत्मगतं) न खल्वयं ब्राह्मणवटुः (प्रकाशं) भोः,मध्यमं खल्वहं शब्दापयामि ।

भीमः – अतः खल्वहं प्राप्तः ।

घटोत्कचः – किं भवानपि मध्यमः ?

भीमः – न तावदपरः—

मध्यमोऽहमवध्यानामुत्सिक्तानां च मध्यमः ।
मध्यमोऽहं क्षितौ भद्र !भ्रातॄणामपि मध्यमः ॥

घटोत्कचः – भवितव्यम् ।

द्वितीयः सुतः-(उपगम्य) भोः पुरुष । प्राप्तोऽस्मि ।

घटोत्कचः – भवानिदानीं खल्वसि मध्यमः । मध्यम ! इत इतः ।

वृद्धः – (भीमसेनमुपगम्य) भो मध्यम ! परित्रायस्व ब्राह्मणकुलम् ।

भीमः – न भेतव्यम्, न भेतव्यम् । कुतो भयमार्यस्य ।

वृद्धः – श्रूयताम् ! अहं खलु केशवदासो नाम ब्राह्मणः महाराजेनयुधिष्ठिरेण यूपग्रामे स्थापितः । कुरुराजेन दुर्योधनेन पुनः राज्यात् निष्कासितः । उत्तरस्यां दिशि मम मातुलस्य सकाशं सकलत्रोस्मि प्रस्थितः ।

भीमः – अरिष्टोऽस्तु पन्थाः । ततस्ततः ।

वृद्धः – ततो मामेष हि —

सजलजलदगात्रः पद्मपत्रायताक्षो
मृगपतिगतिलीलो राक्षसः प्रोग्रदंष्ट्रः ।

जगति विगतशंकस्त्वद्विधानां समक्षं
ससुतपरिजनं मां हन्तुकामोभ्युपैति ॥3॥

भीमः — (आत्मगतम्) एवम् । अनेन ब्राह्मणजनस्य मार्गविघ्नः कृतः । भवतु, निग्रहिष्यामि तावदेनम् । (प्रकाशम्) भोः पुरुष ! तिष्ठ, तिष्ठ ।

घटोत्कचः — एष स्थितोऽस्मि ।

भीमः — किमर्थं ब्राह्मणजनमपराद्ध्यसि ? मुच्यतां द्विजसत्तमः ।

घटोत्कचः — न मुच्यते ।

मुच्यतामिति विस्रब्धं ब्रवीति यदि मे पिता ।
न मुच्यते तथा ह्येष गृहीतो मातुराज्ञया ॥4॥

भीमः — (आत्मगतं) कथं मातुराज्ञेति ।

माता किल मनुष्याणां देवतानां च दैवतम् ।
मातुराज्ञां पुरस्कृत्य वयमेतां दशां गताः ॥5॥

(प्रकाशम्) भो पुरुष ! प्रष्टव्यं खलु तावदस्ति । का नाम भवतो माता ।

घटोत्कचः — श्रूयताम्, हिडिम्बा नाम राक्षसी ।

भीमः — (सहर्षं आत्मगतम्) एवम् हिडिम्बायाः पुत्रोऽयम् । सदृशो ह्यस्य [illegible]: —

[illegible] सत्त्वं बलं चैव पितुर्[illegible] [illegible]दृशं बहु ।
[illegible]गासु वीतकारुण्यं मनश्चैवास्य कीदृशम् ॥16॥

(प्रकाशम्) भो [illegible]ण, गृह्यतां तव पुत्रः । वयमेनमनुगमिष्यामः ।

द्वितीयः — [illegible] मा भवानेवम् ।

[illegible]क्ताः प्रागेव मे प्राणाः गुरुप्राणेष्वपेक्षया ।
युवा रूपगुणोपेतो भवांस्तिष्ठतु भूतले ॥ 7॥

भीमः — आर्य ! मामैवम् । क्षत्रियकुलोत्पन्नोऽहम् । पूज्यतमाः

खलु ब्राह्मणाः । तस्मात् स्वशरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि ।

घटोत्कचः – (आत्मगतम्) एवम्, क्षत्रियोऽयम् । तेनास्य दर्पः । भवतु इममेव हत्वा नेष्यामि । (प्रकाशम्) अथ केनायं वारितः, किं त्वया?

भीमः – अथ किम् ।

घटोत्कचः – तेन हि भवानेव आगच्छतु ।

भीमः – एवम् अतिबलवीर्यात् नानुगच्छामि ।
यदि ते शक्तिरस्ति ततो मां नय ।

घटोत्कचः – किं मां प्रत्यभिजानीते भवान् ?

भीमः – मत्पुत्र इति जाने ।

घटोत्कचः – कथं कथं तव पुत्रोऽहम् ?

भीमः – कथं रुष्यति । मर्षयतु भवान् ।
सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाभिधीयन्ते । अतएव मयाभिहितम् ।

घटोत्कचः – भीतानाम् आयुधं गृहीतम् ।

भीमः – शपामि सत्येन भयं न जाने ज्ञातुं तदिच्छामि भवत्समीपे ।
किं रूपमेतद् वद भद्र तस्य गुणागुणज्ञः
सदृशं प्रपत्स्ये ॥ 8॥

घटोत्कचः – एष ते भयं उपदिशामि । गृह्यताम् आयुधम् ।

भीमः – आयुधमिति, गृहीतमेतन् ।

घटोत्कचः – कथमिव ।

भीमः – काञ्चनस्तम्भसदृशो रिपूणां निग्रहे रतः ।
अयं तु दक्षिणो बाहुरायुधं सहजं मम ॥ 9॥

घटोत्कचः – इदम् उपपन्नं पितुर्मे भीमसेनस्य ।

भीमः – अथ कोऽयं भामो नाम —
विश्वकर्ता शिवः कृष्णः शक्रः, शक्तिधरो यमः ।
एतेषु कथ्यतां भद्र ! केन ते सदृशः पिता ॥10॥

घटोत्कचः – सर्वैः ।

भीमः – धिगनृतमेतत् ।

घटोत्कचः – कथं कथमनृतमित्याह। । क्षिपसि मे गुरुम् । (वृक्षमुत्पाट्य प्रहरति) (आत्मगतम्) कथमनेनापि न शक्यते हन्तुम् । किं नु खलु करिष्ये । भवतु दृष्टम् । एतत् गिरिकूटमुत्पाट्य प्रहरामि (प्रहृत्य) कथमनेनापि न शक्यते हन्तुम् । किं नु खलु करिष्ये । भवतु दृष्टम् । अस्ति मातृप्रसादलब्धो मायापाशः तेन बध्वैनं नेष्यामि (इति मायया बध्नाति ) ।

भीमः – (आत्मगतम्) कथं मायापाशेन बद्धोऽस्मि । किमिदानीं करिष्ये । भवतु दृष्टम् । अस्ति मे महेश्वरप्रसादाल्लब्धो मायापाशमोक्षो मन्त्रः । तं जपामि । (मन्त्रं जप्त्वा मायामपनयति)

घटोत्कचः – (आत्मगतम्) अये पतितः पाशः । (प्रकाशम्) भोःपुरुष ! पूर्वसमयं स्मर ।

भीमः – समयमिति । एष स्मरामि । गच्छाग्रतः ! (उभौ परिक्रामतः)

वृद्धः – पुत्रकाः ! किं कुर्मः ! अयं गच्छति वृकोदरः ।

घटोत्कचः – (उपसृत्य) अम्ब ! भवत्या आहारार्थमानीतो मानुषः ।

हिडिम्बा – जात, कीदृशो मानुष आनीतः ।

घटोत्कचः – भवति! रूपमात्रेण मानुषो न वीर्येण ।

हिडिम्बा – किं ब्राह्मणः, स्थविरः बालो वा ।

घटोत्कचः – न ब्राह्मणः न वृद्धो न वा बालः ।

हिडिम्बा – यद्येवं पश्यामि तावदेनम् ।

(परिक्रम्य अवलोक्य लज्जां नाटयति)

घटोत्कचः – अम्ब ! कोऽयम् !

हिडिम्बा – उन्मत्तक ! दैवतं खल्वस्माकम् ।

(भीमं प्रति) जयतु आर्यपुत्रः ।

भीमः – अये देवी हिडिम्बा । हिडिम्बे, पाण्डवानां वधूस्त्वमसि किमिदमकार्यम् अनुष्ठीयते त्वया ।

हिडिम्बा – आर्यपुत्र ! क्षन्तव्यो मेऽपराधः । (इति पादयोः पतति) (घटोत्कचं प्रति) अभिवादय पितरम् ।

घटोत्कचः – अहं स धार्तराष्ट्रवनदवाग्निर्घटोत्कचोऽभिवादये । पुत्रचापलं क्षन्तुमर्हसि । ( ब्राह्मणपरिवारः उपतिष्ठति)

वृद्धः – एवम्, भीमसेनपुत्रोऽयं घटोत्कचः । भो वृकोदर ! रक्षितमस्मत्कुलं भवता स्वकुलमुद्धृतं च । गच्छामस्तावत् ।

(इति सपुत्रकलत्रो निष्क्रामति)

# अभ्यासः

1. यथास्थानं संधिः विच्छेदो वा क्रियताम् —
मातुः+आहारवेला । किन्नु । स्थितः+अस्मि । ह्येषः । प्राक्+एव । शक्तिरस्ति । शक्तिधरः+यमः । धिगनृतमेतत् । वध्वा+एनम् गच्छांग्रतः। यदि+एवम् ।

2. निम्नाङ्कितानां पदानाम् अर्थं लिखित्वा स्वरचितेषु संस्कृतवाक्येषु प्रयोगः कार्यः–
मर्षयतु; अरिष्टः; विस्रब्धम्;
उपंपन्नम्; समयः ।

3. प्रकृति-प्रत्यय-विभागं कुरुत—
उत्सिक्तानाम्; विनिमातुम्; उपपन्नम्; क्षन्तव्यः;
प्रस्थितः; श्रोतुम्; उत्पाद्य ।

4. रूपपरिचयो देयः —
(अ) अतिक्रामति; आहूयताम्; पश्यामः ; मुच्यते; करिष्ये; कुर्मः; अभिवादय ।
(इ) वनान्तरे; भ्रातॄणाम्; कुरुराजेन; मातुलस्य; प्रजासु; पादयोः ।

5. निम्नलिखितानां वाक्यानाम् आशयं स्पष्टीकुरुत —
(अ) अयं मे प्रकृतिदोषः ।
(इ) न मुच्यते तथा ह्येष गृहीतो मातुराज्ञया ।
(उ) सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाभिधीयन्ते ।
(ऋ) माता किल मनुष्याणां दैवतानां च-दैवतम् ।
(लृ) गुणागुणज्ञः सदृशं प्रपत्स्ये ।
(ए) पाण्डवानां वधूस्त्वमसि किमिदमकार्यमनुष्ठीयते ।
(ओ) रक्षितमस्मत्कुलं स्वकुलमुद्धृतं च ।

6. अधोलिखितानाम् उत्तरं संस्कृतेन देयम् –
(अ) वृद्धस्य किं श्रोतुं न शक्यम् आसीत् ?
(इ) भीमसेनः घटोत्कचं दृष्ट्वा सविस्मयम् किम् अवोचत् ?
(उ) भीमसेनोऽपि मध्यमः कथम् आसीन् ?
(ऋ) वृद्धः भीमसेनम् उपगम्य किम् अवोचत् ?
(लृ) घटोत्कचः मातुराहारार्थं कीदृशं मानुषम् आनीतवान् ?
(ए) हिडिम्बां लज्जान्वितां दृष्ट्वा घटोत्कचः तां किमपृच्छत् तया च किमुत्तरं दत्तम् ?

7. भीमघटोत्कचयोः संवादः स्वभाषया अनूद्यताम् ।

8. निम्नलिखितानि वाक्यानि संस्कृतभाषया लेखनीयानि –
(अ) भीम पाण्डवों में मध्यम था ।
(इ) घटोत्कच भीम का पुत्र था ।
(उ) भीम ने अभयदान देकर ब्राह्मण परिवार की रक्षा की ।
(ऋ) हिडिम्बा ने अपने अपराध के लिये भीम से क्षमायाचना की ।
(लृ) आप ऐसा अनुचित कार्य क्यों करते हैं ?
(ए) मैं आपको प्रणाम करता हूँ, आप मेरी धृष्टता क्षमा करें ।

9. मध्यमव्यायोगः स्वकक्षायामभिनेतव्यः ।

# राज्यादर्शः

वैवस्वतो मनुर्नाम माननीयो मनीषिणाम् ।
आसीन् महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥1॥

तदन्वये शुद्धिमति प्रसूतः शुद्धिमत्तरः ।
दिलीप इव राजेन्दुरिन्दुः क्षीरनिधाविव ॥2॥

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥3॥

सेनापरिच्छदस्तस्य द्वयमेवार्थसाधनम् ।
शास्त्रेष्वकुण्ठिता बुद्धिर्मौर्वी धनुषि चातता ॥4॥

तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥5॥

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थमसक्तः सुखमन्वभूत् ॥6॥

स्थित्यै दण्डयतो दण्ड्यान् परिणेतुः प्रसूतये ।
अप्यर्थकामौ तस्यास्तां धर्म एव मनीषिणः ॥7॥

दुदोह गां स यज्ञाय सस्याय मघवा दिवम् ।
संपद्विनिमयेनोभौ दधतुर्भुवनद्वयम् ॥8॥

न किलानुययुस्तस्य राजानो रक्षितुर्यशः ।
व्यावृत्ता यत्परस्वेभ्यः श्रुतौ तस्करता स्थिता ॥9॥

द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुःष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥10॥

प्रजानां विनयाधानाद् रक्षणाद् भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥11॥

## अभ्यासः

1. सन्धिच्छेदं कुरुत —

| | |
|---|---|
| मनुर्नाम; | भूत्यर्थम् ; |
| क्षीरनिधाविव; | परिच्छदस्तस्य; |
| बुद्धिर्मौर्वी; | फलानुमेयाः; |
| सम्पद्विनिमयेनोभौ; | तस्यास्ताम्; |
| रक्षितुर्युशः; | दधतुर्भुवनद्वयम् ; |
| द्वेष्योऽपि; | शिष्टस्तस्यार्तस्य; |
| यथौषधम्; | पितरस्तासाम् । |

2. विग्रहं कृत्वा समासानां नामानि लिखत —

| | |
|---|---|
| अर्थसाधनम्; | राजेन्दुः; |
| फलानुमेयाः; | संवृतमन्त्रस्य; |
| सम्पद्विनिमयेन ; | विनयाधानम्; |
| जन्महेतवः । | |

3. पदपरिचयो दीयताम् —

| | |
|---|---|
| वैवस्वतः; | माननीयः; |
| शुद्धिमति ; | शुद्धिमत्तरः ; |
| आदत्ते; | उत्स्रष्टुम्; |
| गूढः; | जुगोप ; |
| दण्डयतः; | परिणेतुः; |

द्वेष्यः; सम्मतः;
त्याज्यः; पिता ।

4. अभिप्रायं विशदीकुरुत —
(अ) आसीत् महीक्षितामाद्यः प्रणवश्छन्दसामिव ॥
(इ) प्रजानामेव भूत्यर्थं __________ हि रसं रविः ॥
(उ) तस्य संवृतमन्त्रस्य __________ संस्काराः प्राक्तना इव ॥
(ऋ) स्थित्यै दण्डयतो __________ धर्म एव मनीषिणः ॥
(लृ) दुदोह गां स यज्ञाय ॥
(ए) न किलानुययुः __________ श्रुतौ तस्करता स्थिता ॥
(औ) द्वेष्योऽपि संमतः __________ अङ्गुलीवोरगक्षता ॥
(ऐ) प्रजानां विनयाधानाद् __________ केवलं जन्महेतवः ॥

5. निम्नलिखितानां प्रश्नानां संस्कृतेन उत्तरं देयम् —
(अ) अयं पाठः कस्मात् पुस्तकात् संकलितः ?
(इ) 'रघुवंशम्' कस्य कृतिः ?
(उ) 'दिलीपः' कस्य वंशज आसीत् ?
(ऋ) 'दिलीपः' किमर्थं बलिम् (करम्) अग्रहीत् ?
(लृ) तस्य प्रारम्भाः (योजनाः) कीदृशा अभूवन् ?
(ए) स सुखं कथम् अन्वभूत् ?
(ओ) दिलीपः गां किमर्थं दुदोह ?
(ऐ) दिलीपस्य राज्ये तस्करता क्व स्थिता ?
(औ) तस्य द्वेष्योऽपि सम्मतः किमिव आसीत् ?

6. अधोलिखितेषु वाक्येषु प्रदत्तयोः द्वयोः एकं गृहीत्वा वाक्यानि पुनर्लिख्यन्ताम् —
(अ) मनुः महीक्षिताम् आद्यः/मान्यः आसीत् ।
(इ) प्रजानां/राज्ञां भूत्यर्थं स बलिमग्रहीत् ।
(उ) स संत्रस्तः/अत्रस्तः आत्मानं जुगोप ।
(ऋ) अर्थकामौ तस्य धर्मः/व्यसनम् आस्ताम् ।
(लृ) प्रजानां पितरः तासां कर्महेतवः/जन्महेतवः आसन् ।

# चन्द्रोदयः

अनेन च समयेन परिणतो दिवसः। विरलातपः तनिमानमभजत्। पारावतपादपाटलरागो रविरम्बरतलाद् अवालम्बत। विहाय धरणितलं शकुनय इव रविकिरणाः तरुशिखरेषु स्थितिमकुर्वन्।

अस्तमुपगते च भगवति मरीचिमालिनि विद्रुमलतेव पाटला समदृश्यत सन्ध्या। क्वापि विहृत्य दिवसावसाने लोहिततारका तपोवनधेनुरिव कपिला सन्ध्या शनैः शनैः समागच्छत् आश्रमपदम्।

अचिराच्च सिद्धकन्यकाभिर्विक्षिप्तं कुसुमशबलमिव तारकितं वियदराजत। मुनिजनेनोद्ध्र्वं विप्रकीर्णैः प्रणामाञ्जलिसलिलैः क्षाल्यमान् इवागलत् संध्यारागः।

क्षयमुपगतायां च संध्यायां तद्विनाशदुःखिता विभावरी तिमिरोद्गमं कृष्णाजिनमिव अवहत्। अपहाय मुनिहृदयानि सर्वमन्यदन्धकारतां तिमिरमनयत्।

क्रमेण चामृतदीधितिः धरातलादचिरोद्वाहिता वधूरिवावगुण्ठाद् व्यलोकयत्। गगनतलं चाध्यतिष्ठत्। हंसधवला धरण्यामपतत् अम्बरतलात् ज्योत्स्ना गङ्गेव त्र्यम्बकोत्तमाङ्गात्।

चन्द्रिकाजलपानलोभात् अवतीर्णो हिमकरसरसि हरिणः अमृतपङ्कलग्न इवादृश्यत। कुसुमपाण्डुरैः अगाहन्त हंसैरिव कुमुदसरांसि चन्द्रपादैः।

शनैः शनैश्च समुदिते भगवति हिमद्युति सुधाधूलिपटलेनेव धवलीकृतं चन्द्रातपेन अराजत सकलं जगत्।

# अभ्यास

1. संस्कृतेन उत्तरं देयम् —
   (अ) अस्य पाठस्य संकलनं कस्मात् ग्रन्थात् कृतम् क्श्चास्य रचयिता ?
   (इ) परिणते दिवसे आतपः कीदृशः अभवत् ?
   (उ) सन्ध्यागमे शकुनयः कुत्र स्थितिमकुर्वन् ?
   (ऋ) सन्ध्यायाः वर्णः कीदृशो जातः ?
   (लृ) तिमिरोद्गमस्य तुलना केन सह कृता ?
   (ए) अम्बरतलात् ज्योत्स्ना धरण्यां किमिव अपतत् ?
   (ओ) जलपानलोभात् अवतीर्णः हरिणः केनरूपेण चित्रितः ग्रन्थकारेण ?
   (ऐ) चन्द्रोदयानन्तरं सकलं जगत् कीदृशमराजत ?

2. विग्रहं निर्दिशन् समासानां नामानि लिखत —
   विरलातपः; पारावतपादपाटलरागः;
   लोहिततारकाः; सन्ध्यारागः;
   तिमिरोद्गमम्; कुसुमपाण्डुरैः ।

3. संन्धिं कुरुत —
   विरल+आतपः; रविः+अम्बरतलात;
   विद्रुमलता+इव; अचिरात्+च;
   तिमिर+उद्गमम्; हंसैः+इव ।

4. पदपरिचयो दीयताम् —
   परिणतः; तनिमानम्; अवालम्बत;
   विहृत्य; अमृतदीधितिः; अराजत ।

   परिणतः; विहाय; अवहत्;
   अवतीर्णः; धरण्याम्; हिमद्युति ।

5. स्वभाषया अर्थं लिखित्वा संस्कृतवाक्यांनि विरचयत —
   परिणतः; तनिमानम्; अवालम्बत;

विहृत्य; अमृतदीधितिः; अराजत ।

6. स्वभाषया आशयं स्पष्टीकुरुत —
   (अ) अनेन च __________ दिवसः ।
   (इ) पारावत __________ अवालम्बत ।
   (उ) अचिराच्च __________ वियदराजत् ।
   (ऋ) अपहाय __________ तिमिरमनयत् ।
   (लृ) क्रमेण __________ व्यलोकयत् ।

7. उपयुक्तानि पदानि संयोज्य निम्नांकितानि वाक्यानि पुनर्लिखत —
   (अ) चन्द्रोदयः कादम्बरीतः/हर्षचरितात् संकलितः ।
   (इ) परिणते दिवसे शकुनयः गिरिशिखरेषु/तरुशिखरेषु स्थितिमकुर्वन् ।
   (उ) चन्द्रिकाजलपानलोभात् अवतीर्णो हिमकरसरसि हरिणः अमृतपङ्के मग्नः/लग्नः इवादृश्यत ।
   (ऋ) समुदिते भगवति हिमद्युति चन्द्रातपेन धवलीकृतं/कवलीकृतं सकलं जगत् ।

# ऋतुचर्या

इह खलु संवत्सरं षडङ्गम् ऋतुविभागेन विंद्यात् । तत्र आदित्यस्योदगयनमादानं च त्रीन् ऋतून् शिशिरादीन् ग्रीष्मान्तान् व्यवस्येत्, वर्षादीन् पुनर्हेमन्तान् दक्षिणायनं विसर्गं च ।

विसर्गे पुनर्वायवो नातिरूक्षाः प्रवान्ति सोमश्च अव्याहतबलः शिशिराभिर्भाभिः आपूरयन् जगदाप्याययति शश्वत् । अतो विसर्गः सौम्यः ।

आदानं पुनराग्नेयम् । तत्र रविः भाभिः आददानो जगतः स्नेहं, वायवः तीव्ररुक्षाश्चोपशोषयन्तः शिशिरवसन्तग्रीष्मेषु यथाक्रमं रौक्ष्यमुत्पादयन्तो नृणां दौर्बल्यमावहन्ति ।

वर्षाशरद्धेमन्तेषु तु दक्षिणाभिमुखेऽर्के मेघवातवर्षाभिहतप्रतापे, शशिनि चाव्याहतबले माहेन्द्रसलिलप्रशान्तसन्तापे जगति, अरुक्षाः रसाः प्रवर्धन्ते बलं चोपचीयते नृणामिति ।

भवन्ति चात्र श्लोकाः —

हेमन्ते—शीते शीतानिलस्पर्शसंरुद्धो बलिनां बली ।
रसं हिनस्त्यतो वायुः शीते शीते प्रकुप्यति ॥ 1॥

तस्मात्तुषारसमये स्निग्धाम्ललवणान् रसान् ।
गोरसानिक्षुविकृतीर्वसां तैलं नवौदनम्॥ 2॥

अभ्यङ्गोत्सादनं मूर्ध्नि तैलं जैन्ताकमातपम् ।
हेमन्तेऽभ्यस्यतस्तोयमुष्णं चायुर्नहीयते ॥ 3॥

शिशिरे — कटुतिक्तकषायाणि वातलानि लघूनि च ।
वर्जयेदन्नपानानि शिशिरे शीतलानि च ॥ 4॥

हेमन्तशिशिरौ तुल्यौ शिशिरेऽल्पं विशेषगम् ।
तस्माद्धैमन्तिकः सर्वः शिशिरे विधिरिष्यते ॥ 5॥

वसन्ते — वसन्ते निश्चितः श्लेष्मा दिनकृद्भाभिरीरितः ।
कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून्॥ 6॥

तस्माद्वसन्ते कर्माणि वमनादीनि कारयेत् ।
गुर्वम्लस्निग्धमधुरं दिवास्वप्नं च वर्जयेत् ॥ 7॥

व्यायामोद्वर्तनं धूमं. कवलग्रहमञ्जनम्।
सुखाम्बुना शौचविधिं शीलयेत्कुसुमागमे ॥ 8॥

ग्रीष्मे — मयूखैर्जगतः स्नेहं ग्रीष्मे पेपीयते रविः ।
स्वादु शीतं द्रवं स्निग्धमन्नपानं तदा हितम् ॥9॥

शीतं सशर्करं मन्थं जाङ्गलान् मृगपक्षिणः ।
घृतं पयः सशाल्यन्नं भजन् ग्रीष्मे न सीदति ॥10॥

लवणाम्लकटूष्णानि व्यायामं चात्र वर्जयेत् ।
दिवा शीतगृहे निद्रा निशि चन्द्रांशुशीतले ॥11॥

वर्षायां — वर्षास्वग्निबले क्षीणे कुप्यन्ति पवनादयः ।
तस्मात्साधारणः सर्वो विधिर्वर्षासु शस्यते ॥12॥

शरदि — वर्षाशीतोचिताङ्गानां सहसैवार्करश्मिभिः ।
तप्तानामाचितं पित्तं प्रायः शरदि कुप्यति ॥13॥

तत्रान्नपानं मधुरं लघु शीतं सतिक्तकम् ।
पित्तप्रशमनं सेव्यं मात्रया सुप्रकाङ्क्षितैः ॥14॥

तिक्तस्य सर्पिषः पानं विरेको रक्तमोक्षणम् ।
धाराधरात्यये कार्यमातपस्य च वर्जनम् ॥15॥

शारदानि च माल्यानि वासांसि विमलानि च ।
शरत्काले प्रशस्यन्ते प्रदोषे चेन्दुरश्मयः ॥16॥

ऋतावृतौ नृभिः सेव्यमसेव्यं यच्च किं च न ।
तदेवात्र विनिर्दिष्टमायुषो वर्धनं परम् ॥17॥

## अभ्यासः

1. सन्धिच्छेदो विधेयः —
   शिशिराभिर्भाभिः; हिनस्त्यतः;
   रोगांस्ततः; धाराधरात्यये;
   ऋतावृतौ; चोपचीयते;
   नवौदनम्; चेन्दुरश्मयः;
   दिनकृद्भाभिरीरितः ।

2. विग्रहपूर्वकं समासनामनिर्दिशत —
   शिशिरादीन्; दक्षिणायनम्;
   शिशिरवसन्तग्रीष्मेषु; मेघवातवर्षाभिहतप्रतापे;
   दिवास्वप्नम्; इन्दुरश्मयः;
   धाराधरात्यये ।

3. स्वरचितसंस्कृतवाक्येषु प्रयोगो विधेयः —
   संवत्सरः; भाभिः;
   शशिनि; अर्के;
   तुषारसमयः; शिशिरः;
   वाधते; सीदति ।

4. रिक्तस्थलेषु पदानि पूरयत —
   (अ) विसर्गे पुनर्वायवो __________ प्रवान्ति ।
   (इ) आदानं पुनः __________ ।
   (उ) रौक्ष्यमुत्पादयन्तो नृपां __________ आवहन्ति ।
   (ऋ) बलं चोपचीयते __________ ।

5. धातुकालप्रत्ययपरिचयो देयः —
   विद्यात्; व्यवस्येत्;
   आप्यायति; प्रवर्धन्ते;
   पेपीयते ।

6. संस्कृत भाषया उत्तरं देयम् —
   (अ) उदगयनस्य दक्षिणायनस्य च कः कालः ?
   (इ) कः समयः सौम्यः कश्चाग्नेयः कथ्यते ?
   (उ) शिशिरे के रसाः अन्नपानानि च वर्जनीयानि ?
   (ऋ) वसन्ते रोगाः कथं समुपजायन्ते ?
   (लृ) दिवास्वप्नं कस्मिन् काले वर्जयेत् ?
   (ए) ग्रीष्मकाले कीदृशमन्नपानं हितं भवति ?
   (ओ) साधारणो विधिः कस्मिनृतौ स्वीकार्यः ?
   (ऐ) कस्माद् ग्रंथादुद्धृतोऽयं पाठस्तस्य रचयिता कः ?

7. अधोलिखितानां वाक्यांशानामाशयं स्पष्टीकुरुत —
   (अ) बलिनां बली ।
   (इ) गोरसानिक्षु तैलं नवौदनम् ।
   (उ) हेमन्ते चायुर्नहीयते ।
   (ऋ) मयूखैर्जगतः पेपीयते रविः ।
   (लृ) मात्रया सुप्रकाङ्क्षितैः ।

# पद्यपीयूषम्

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता,
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद् भयम् ।
भक्तिश्चक्रिणि शक्तिरात्मदमने संसर्गमुक्तिः खले,
एते यत्र वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ 1॥

राजा धर्मविना, द्विजः शुचिविना, ज्ञानं विना योगिनः,
कान्ता सत्यविना, हयो गतिविना, पूषा च ज्योतिर्विना ।
योद्धा शौर्यविना, तपो व्रतविना, छन्दोविना गीयते,
भ्राता स्नेहविना, नरो हरिविना, मुच्येत शीघ्रं बुधैः ॥ 2॥

वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः,
पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः ।
निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टश्रियं मन्त्रिणः,
सर्वः कार्यवशाज्जनोऽभिरमते कस्यास्ति को वल्लभः ॥ 3॥

वित्तेन किं वितरणं यदि नास्ति दीने,
किं सेवया यदि परोपकृतौ न यत्नः ।
किं सङ्गमेन तनयो यदि नेक्षणीयः,
किं यौवनेन विरहो यदि वल्लभायाः ॥ 4॥

स्वर्गः किं यदि वल्लभा निजवधूः, किं वा विभूषाविधिः.
लावण्यं यदि, किं सुधाकरकरैः शृङ्गारगर्भा गिरः ।
मृत्युः किं यदि दुर्जनेष्ववनतिः, किं धिक् यदि प्रार्थना,
प्राप्तेष्टः करिकेतनो यदि भवेत् किं कल्पभूमीरुहैः ॥ 5॥

निःस्वो वष्टि शतं, शतो दशशतं, लक्षं सहस्राधिपो,
लक्षेशः क्षितिपालतां, क्षितिपतिश्चक्रेशतां वाञ्छति।
चक्रेशः पुनरिन्द्रतां, सुरपतिर्ब्राह्मं पदं वाञ्छति,
ब्रह्मा शैवपदं, शिवो हरिपदमाशावधिं को गतः ॥ 6॥

मित्रं स्वच्छतया, रिपुं नयबलैर्लुब्धं धनैरीश्वरं
कार्येण, द्विजमादरेण, युवतिं प्रेम्णा, समैर्बान्धवान् ।
अत्युग्रं स्तुतिभिर्गुरुं प्रणतिभिर्मूर्खं कथाभिर्बुधं
विद्याभी रसिकं रसेन सकलं शीलेन कुर्याद् वशम् ॥ 7॥

नीतिर्भूमिभुजां नतिर्गुणवतां ह्रीरङ्गनानां धृति-
र्दम्पत्योः शिशवोगृहस्य, कविता बुद्धेः, प्रसादो गिराम् ।
लावण्यं वपुषः, स्मृतिः सुमनसां शान्तिर्द्विजस्य, क्षमा
शक्तस्य, द्रविणं गृहाश्रमवतां, स्वास्थ्यं सतां मण्डनम् ॥ 8॥

लोभोप्यस्ति गुणेन किं, पिशुनता यद्यस्ति किं पातकैः,
सौजन्यं यदि किं परैः, सुमाहेमा यद्यस्ति किं मण्डनैः ।
सत्यं चेत्तपसा च किं, शुचि मनो यद्यस्ति तीर्थेन किं,
सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ 9॥

## अभ्यासः

1. अधोलिखितेषु सन्धिच्छेदो विधीयताम् —

भक्तिश्चक्रिणि;
दुर्जनिष्ववनतिः;
अत्युग्रम्;
लोभोप्यस्ति ।
पर्युषितम्;
पुनरिन्द्रताम्;
ह्रीरङ्गनानाम्;

2. विग्रहं कृत्वा समासनाम निर्दिशत —

सज्जनसङ्गमे; निर्मलगुणाः;
संसर्गमुक्तिः; धर्मविना;
भ्रष्टश्रियम्; सहस्राधिपः;
शैवपदम्; दशशतम्;

3. संस्कृतभाषया उत्तराणि दीयन्ताम् —

(अ) केभ्यो नरेभ्यो नमः ?
(इ) राजा हयः योद्धा भ्राता च केन विना मुच्यन्ते ?
(उ) हरिविना बुधैः के मुच्यन्ते ?
(ऋ) वित्तस्य लाभः कदा भवति ?
(लृ) तनयः कीदृशः भवेत् ?
(ए) मृत्युः कः कथितः ?
(ओ) लक्षेशः किं वाञ्छति ?
(ऐ) सकलं केन वशं कुर्यात् ?
(औ) सतां मण्डनं किम् ?

4. पदपरिचयो दीयताम् —

व्यसनम्; पर्युषितम्;
परोपकृतौ; वल्लभा;
लुब्धम्; गुणवताम्;
लावण्यम्; पिशुनता;
सौजन्यम्; मण्डनैः;
चक्रिणि; वष्टि ।

5. रिक्तस्थानानि पूरयत —

(अ) भक्तिश्चक्रिणि शक्तिरात्मदमने __________ खले ।
(इ) सर्वः कार्यवशाज्जनोभिरमते कस्यास्ति को __________ ।
(उ) स्वर्गः किं यदि __________ निजवधूः ?
(ऋ) __________ किं यदि दुर्जनेष्ववनतिः, किं धिक् यदि ______ ।
(लृ) विद्याभीरसिकं रसेन सकलं __________ कुर्याद्वशम् ।
(ए) __________ यदि किं धनैरपयशो यद्यस्ति किं __________ ।

6. निम्नलिखितानां शब्दानां अर्थाः लेख्याः —

| | |
|---|---|
| स्वयोषिति; | भक्तिश्चक्रिणि; |
| हयोगतिविना; | पर्युषितम्; |
| नेक्षणीयः; | शृंगारगर्भाः; |
| करिकेतनं; | चक्रेशताम्; |
| नयबलैः; | पिशुनता । |

7. कोष्ठकात् शुद्धं शब्दं उद्धृत्य रिक्तस्थानानि पूरयत —

(अ) यत्र जनस्य ________ चक्रिणि भवति, तस्मै जनाय नमः ।
(भक्तिः, शक्तिः)

(इ) बुधाः — विना योगिनं मुञ्चन्ति ।
(मानं, ज्ञानं)

(उ) विहगाः ________ वृक्षं त्यजन्ति ।
(हीनपुष्पं, क्षीणफलं)

(ऋ) किं ________ विरहो यदि वल्लभायाः ?
(धनेन, यौवनेन)

(ऌ) रसिकं ________ वंशं कुर्यात् ।
(शीलेन, रसेन)

(ए) दम्पत्योः मण्डनं ________ भवति ।
(प्रीतिः, धृतिः)

(ओ) पिशुनता यद्यस्ति किं ________ ।
(पातकैः, घातकैः)

8. अधोलिखितानाम् आशयं स्पष्टीकुरुत —

(अ) लोकापवादाद् भयम् ।
(इ) छन्दो विना गीयते ।
(उ) भ्रष्टश्रियं मन्त्रिणः ।
(ऋ) किं सुधाकरकरैः शृंगारगर्भा गिरः ।
(ऌ) समैबान्धवान्
(ए) आशावधि को गतः ?
(ऐ) सुमहिमा यद्यस्ति किं मण्डनैः ।
(ओ) स्मृतिः सुमनसाम् ।

# भरतः सर्वदमनः

दुष्यन्तः (निमित्तं सूचयित्वा) —

मनोरथाय नाशंसे किं बाहो स्पन्दसे वृथा ।
पूर्वावधीरितं श्रेयो दुःखाय परिवर्तते ॥ 1॥

(नेपथ्ये)

मा खलु चापलं कुरु । कथं गत एवात्मनः प्रकृतिम् ।

दुष्यन्तः (कर्णं दत्वा) अभूमिरियमविनयस्य। को नु खल्वेष निषिध्यते । (शब्दानुसारेणावलोक्य सविस्मयं) अये को नु खल्वयम् अनुबध्यमानस्तपस्विनीभ्याम् अबालसत्वो बालः ।

अर्धपीतस्तनं मातुरामर्दक्लिष्टकेसरम् ।
प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति ॥ 2॥

(ततः प्रविशति यथानिर्दिष्टकर्मा तपस्विनीभ्यां बालः)

बालः — जृम्भस्व सिंह ! दन्तांस्ते गणयिष्ये ।

प्रथमा — अविनीत ! किं नोऽपत्यनिर्विशेषाणि सत्वानि विप्रकरोषि । हन्त वर्धति ते संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि ।

दुष्यन्तः — किं नु खलु बालेऽस्मिन् औरस इव पुत्रे स्निह्यति मे मनः । नूनमनपत्यता मां वत्सलयति ।

द्वितीया – एषा खलु केसरिणी त्वां लङ्घयति यद्यस्याः पुत्रकं न मुञ्चसि ।

बालः – (सस्मितम्) अहो बलीयः खलु भीतोऽस्मि । (इत्यधरं दर्शयति)

प्रथमा – वत्स ! एनं बालमृगेन्द्रं मुञ्च । अपरं ते क्रीडनकं दास्यामि ।

बालः – कुत्र, देहि तत् । (इति हस्त प्रसारयति)

द्वितीया –सुव्रते ! न शक्य एष वाचामात्रेण विरमयितुम्। गच्छ त्वम् । मदीये उटजे मृत्तिकामयूरस्तिष्ठति । तमस्योपहर ।

प्रथमा – तथा!(इति निष्क्रान्ता)

बालः – अनेनैव तावत्क्रीडिष्यामि । (इति तापसीं विलोक्य हसति )

तापसी – भवतु । न मामयं गणयति । (राजानमवलोक्य) भद्रमुख ! मोचयानेन बाध्यमानं बालमृगेन्द्रम् ।

दुष्यन्तः – आकारसदृशं चेष्टितमेवास्य कथयति । (बालस्पर्शमुपलभ्य, आत्मगतम्)

अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैवम् ।<br>
कां निर्वृतिं चेतसि तस्य कुर्याद्यस्यायमङ्गात् कृतिनः प्ररूढः ।।

(बालमुपलालयन्, प्रकाशम्)

अथ कोऽस्य व्यपदेशः ।

तापसी – पुरूवंशः ।

दुष्यन्तः – (आत्मगतम्) कथमेकान्वयी मम ।

(प्रविश्य)

द्वितीया तापसी – सर्वदमन ! शकुन्तलावण्यं प्रेक्षस्व ।

बालः – कुत्र वा ममाम्बा ।

दुष्यन्तः – (आत्मगतम्) किं वा शकुन्तलेत्यस्य मातुराख्या ।

बालः – रोचते म एष मयूरः (इति क्रीडनकमादत्ते)

## अभ्यासः

1. निम्नाङ्कितेषु विग्रहः समासनाम च लेख्यः—

पूर्वावधीरितम्; अबालसत्वः;
आमर्दक्लिष्टकेसरम्; अपत्यनिर्विशेषाणि;
बालमृगेन्द्रम्; मृत्तिकामयूरः;
एकान्वयः ।

2. अधोलिखितानां पदानां प्रयोगः स्वरचितवाक्येषु करणीयः—

सविस्मयम्; कर्षति;
स्निह्यति ; केसरिणी;
क्रीडनकम्ः; उटजे;
व्यपदेशः; प्रेक्षस्व ।

3. प्रकृतिप्रत्ययपरिचयो देयः —

सूचयित्वा; प्रक्रीडितुम् ;
अवलोक्य; अनुबध्यमानः;
भीतः; निष्क्रान्ता;
उपलभ्य; उपलालयन् ।

धातुकालवचनपरिचयः प्रदर्शनीयः—

| | |
|---|---|
| स्पन्दसे; | निषिध्यते; |
| गणयिष्ये; | विप्रकरोषि; |
| वत्सलयति; | मुञ्चसि; |
| दास्यामि; | उपहर; |
| मोचय; | प्रेक्षस्व । |

5. रिक्तस्थानानां पूर्तिः करणीया —
   (अ) अपत्यनिर्विशेषाणि __________ विप्रकरोषि ।
   (इ) पुत्रे स्निह्यति मे __________ ।
   (उ) यद्यस्याः __________ न मुञ्चसि ।
   (ऋ) अपरं क्रीडनकं ते __________ ।
   (लृ) __________ चेष्टितमेवास्य कथयति ।

6. निम्नाङ्कितपदेषु सन्धिच्छेदो विधेयः —

| | |
|---|---|
| गत एवात्मनः; | औरस इव; |
| दन्ताँस्ते; | यद्यस्याः; |
| शकुन्तलेत्यस्य । | |

7. रेखाङ्कितपदानां स्थानेषु शुद्धपदानि स्थाप्यानि —
   (अ) केसरिणी तुभ्यं लङ्घयति ।
   (इ) बालमृगेन्द्राय मुञ्च ।
   (उ) अस्मादेव तावत्क्रीडिष्यामि ।
   (ऋ) रोचते मामेष मयूरः ।

8. संस्कृतभाषया उत्तरं देयम् : —
   (अ) कस्य कवेः कस्मात् पुस्तकात्संगृहीतोऽयं पाठः ?
   (इ) बालः कीदृशं सिंहशिशुं कर्षति स्म ?
   (उ) तापसी बालक्रीडार्थं किं दत्तवती ?
   (ऋ) क्रीडापरस्य बालस्य मातुः किं नामधेयमस्ति ?
   (लृ) बालाय किं रोचते ?

9. भावं स्पष्टीकुरुतः —
   (अ) अभूमिरियमविनस्य
   (इ) अबालसत्वो बालः ।
   (उ) अपत्यनिर्विशेषाणि सत्वानि ।
   (ऋ) आकारसदृशं चेष्टितमेवास्य कथयति ।
   (ऌ) यस्याङ्गात् कृतिनः प्ररुढः ।

द्वादशः पाठः

# पितुर्वात्सल्यम्

अवनिपतिस्तु (प्रभाकरवर्धनः) दूरादेवागच्छन्तं तनयं हर्षवर्धनं दृष्ट्वा सुतरामस्वस्थोऽपि प्रसार्य भुजौ एहि एहीति आह्वयन् शरीरार्द्धेन शयनात् उदतिष्ठत् । ससंभ्रममुपसृत्य चैनं विनयावनम्रं बलादुरसि निवेश्यं, पीडयन्नङ्गैरङ्गानि, निमीलयन् अजस्रास्रविस्राविणी विलोचने, विस्मृतज्वरसंज्वरः सुचिरम् आलिलिङ्ग ।

कथंकथमपि चिराद् विमुक्तं कृतनमस्कारं, प्रणतजननीकम् आसीनं च पिबन्निव विगतनिमेषः निश्चलेन चक्षुषा व्यलोकयत् । परस्पर्श च पुनः पुनर्वेपथुमता पाणितलेन क्षयक्षामकण्ठश्च कृच्छ्रादिव अवादीत् — "वत्स ! कृशोऽसि" । भण्डिः आसन्नपरिचारकः अकथयत् — देव ! तृतीयमहः कृताहारस्यास्याद्य ।

तच्छ्रुत्वा कथं कथममि दीर्घं निःश्वस्य उवाच वत्स ! जानामि त्वां पितृप्रियम् अतिमृदुहृदयम् । नार्हस्यात्मानं शुचे दातुम् । सुखं च राज्यं च वंशश्च प्राणाश्च त्वयि मे स्थिताः । त्वद्विधानां पीडाः पीडयन्ति माम् । अपि च वत्स ! प्रजाभिस्तु बन्धुमन्तो राजानः न ज्ञातिभिः । तदुत्तिष्ठ । कुरु पुनरेव सर्वाः क्रियाः । कृताहारे च त्वयि अहमपि स्वयम् उपयोक्ष्ये पथ्यम् ।

इत्येवमभिहितस्य चास्य धक्ष्यन्निव हृदयम् अतितरां शोकानलः संदुधुक्षे । क्षणमात्रं च स्थित्वा पित्रा पुनराहारार्थम् आदिश्यमानः

धवलगृहादवततार । गत्वा स्वधाम कतिचित् कवलान् अगृह्णात् । आचामंश्च चामरग्राहिणम् आदिदेश – विज्ञाय आगच्छ कथमास्ते तातः इति । गत्वा च प्रतिनिवृत्य च देव ! तथैव इति विज्ञापितः सर्वानाहूय उपह्वरे वैद्यान् पप्रच्छ किमस्मिन् एवंविधे विधेयमधुना इति । तेषां मध्ये युवा रसायनो नाम वैद्यकुमारः साम्रस्तूष्णीम् अधोमुखोऽभूत् । पृष्टश्च सोऽब्रवीत् – देव ! श्वः प्रभाते यथावस्थितम् आवेदयिष्यामि इति । गतेषु, च भिषक्षु क्षतधृतिः पितुः समीपमेव पुनरगात् । तत्र च पितुः आलापान् आकर्णयन् दूयमानहृदयः दुःखदीर्घा जाग्रदेव निशामनैषीत् ।

## अभ्यासः

1. सन्धिच्छेदः क्रियताम् —

| | |
|---|---|
| एहीति; | पिबन्निव; |
| व्यलोकयत्; | कृशोऽसि; |
| नार्हस्यात्मानम्; | पुनरेव; |
| पुनराहारार्थम्; | पृष्टश्च । |

2. विग्रहं कृत्वा समासानां नामानि लिखत —

| | |
|---|---|
| क्षयक्षामकण्ठः; | कृताहारे; |
| शोकानलः; | वैद्यकुमारः; |
| दूयमानहृदयः; | दुखःदीर्घाम्; |
| | । |

3. प्रकृतिप्रत्ययविभागो विधेयः —

| | |
|---|---|
| दृष्ट्वा; | प्रसार्य; |
| आह्वयन्; | विमुक्तम्; |
| दातुम्; | आसन्नः; |
| आदिश्यमानः; | बन्धुमन्तः; |
| अभिहितस्य; | विज्ञाय । |

4. अधोलिखितानां पदानां अर्थं लिखित्वा वाक्येषु प्रयोगं कुरुत —



सुतराम्; आह्वयन्;
ससम्भ्रमम्; सुचिरम्;
उपयोक्ष्ये; कतिचित्;
प्रतिनिवृत्य; यथावस्थितम् ।

5. दश वाक्येषु अस्य पाठस्य सारांशं स्वसंस्कृतेन लिखत ।

6. स्वभाषया अनुवादो विधेयः —
(अ) ससम्भ्रममुपसृत्य __________ आलिलिङ्ग ।
(इ) कथं कथमपि __________ व्यलोकयत् ।
(उ) जानामि __________ अतिमृदुहृदयम् ।
(ऋ) कृताहारे __________ पथ्यम् ।
(लृ) तथैव इति विज्ञापितः __________ विधेयमधुना इति ।

7. अधोलिखितानां वाक्यानां समर्थनं निरसनं वा क्रियताम् —
(अ) प्रभाकरवर्धनः हर्षवर्धनस्य पिता आसीत् ।
(इ) सः हर्षवर्धनं दृष्ट्वा शयन एवातिष्ठत् ।
(उ) हर्षः पितृप्रियः आसीत् ।
(ऋ) राजानः ज्ञातिभिः बन्धुमन्तः ।
(लृ) स्वपितुः आलापान् आकर्णयन् हर्षः सुखेन निशामनैषीत् ।

8. संस्कृतेन उत्तरं देयम् —
(अ) पितुर्वात्सल्यम् इत्यत्र पितृपदेन क उद्दिष्टः ?
(इ) कस्मात् ग्रन्थादुद्धृतोऽयं पाठः कश्च तस्य रचयिता ?
(उ) किमनेन लेखकेन लिखितः अन्यः कोऽपि पाठः विद्यते तव पाठ्यपुस्तके ? तस्य शीर्षकं निर्दिश्य मूलकृतेः अभिधानमपि लिखत ।

(ऋ) हर्षवर्धनं दृष्ट्वा अवनिपतिः किम् अकरोत् ?
(लृ) तदानीं हर्षवर्धनस्य कीदृशी अवस्था आसीत् ?
(ए) प्रभाकरवर्धनेन हर्षः केन रूपेण उद्बोधितः ?
(ओ) ततः हर्षेण किं कृतम् ?
(ऐ) वैद्यकुमारेण किमभिहितम् ?
(औ) पितुः आलापान् आकर्णयन् हर्षः कीदृशोऽभवत् ?

# सत्सङ्गमः

(नेपथ्ये) स्वागतं तपोधनायाः ।

(ततः प्रविशति अध्वगवेशा तापसी)

तापसी — अये वनदेवतेयं फलकुसुमगर्भेण पल्लवार्घ्येण मामुपतिष्ठते ।

(प्रविश्य)

वनदेवता — (अर्घ्यं विकीर्य)

यथेच्छं भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि तपसो योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ 1॥

तापसी — किमत्रोच्यते —

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ 2॥

(उभावुपविशतः)

वनदेवता — कां पुनरत्रभवतीमवगच्छामि ।

तापसी — आत्रेय्यस्मि ।

वनदेवता – आर्ये आत्रेयि, कुतः पुनरिहागम्यते ?
किं प्रयोजनो वा दण्डकारण्यप्रचारः ?

आत्रेयी – अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्‌गीथविदोवसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
बाल्मीकिपार्श्वादिह पर्यटामि ॥ 3॥

वनदेवता – यदा तावदन्येपि मुनयस्तमेव पुराणं ब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते तत्कोऽयमार्याया दीर्घप्रवासप्रयासः ।

आत्रेयी – तत्र महान् अध्ययनप्रत्यूह इत्येष दीर्घप्रवासः अङ्गीकृतः ।

वनदेवता – कीदृशः ?

आत्रेयी – तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्‌भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयम् उपनीतम् ।

वनदेवता – अपि तयोर्नाम संविज्ञानमस्ति ।

आत्रेयी – तयैव किलदेवतया तयोः कुशलवौ इति नामनी प्रभावश्चाख्यातः ।

वनदेवता – अहो नु भोश्चित्रमेतत् ।

आत्रेयी – तौ च वाल्मीकिना धात्रीकर्मतः परिगृह्य पौषितौ च । समनन्तरं क्षात्रेण कल्पेनोपनीय त्रयीविद्यामध्यापितौ । न ह्येताभ्याम् अतिप्रदीप्तप्रज्ञामेधाभ्याम् अस्मदादेः सहाध्ययनयोगोऽस्ति ।

वनदेवता – अयमसौ अध्ययनप्रत्यूहः ?

आत्रेयी – विश्रान्तास्मि भद्रे । गम्यते अधुना ।
(इति निष्क्रान्तौ)

# अभ्यासः

1. सन्धिच्छेदं कुरुत —

तरुच्छाया;
तेभ्योऽधिगन्तुम्;
मुनयस्तमेव;
तथैव;
किमत्रोच्यते;
तावदन्येऽपि;
ब्रह्मपारायणायोपासते;
भोश्चित्रमेतत् ।

2. विग्रहं कृत्वा समासानां नामानि निर्दिशत —

तपोधनायाः;
विनयमधुरः;
निगमान्तविद्याम्;
अध्ययनप्रत्यूहः;
वनदेवता;
दण्डकारण्यप्रचारः;
दीर्घप्रवासप्रयासः;
दारकद्वयम् ।

3. पदपरिचयो दीयताम् —

उपतिष्ठते;
अधिगन्तुम्;
निष्क्रान्तौ;
आगम्यते;
विकीर्य;
भूयांसः;
परिगृह्य ;
उपनीय ।

4. विशदीक्रियताम् —

(अ) सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
(इ) तदपि न पराधीनमिह वः ।
(उ) अनवगीतः परिचयः ।
(ऋ) रहस्यं साधूनामनुपधि विशुद्धं विजयते ।
(लृ) कां पुनरत्रभवतीमवगच्छामि ।
(ए) भूयांस उद्गीथविदो वसन्ति ।
(ओ) तत्कोऽयमार्याया दीर्घप्रवासप्रयासः ।
(ऐ) क्षात्रेण कल्पेन ।
(औ) अतिप्रदीप्तप्रज्ञामेधाभ्याम् ।

5. निम्नलिखितानां प्रश्नानाम् संस्कृतभाषया उत्तरं दत्त —
   (अ) वनदेवता अर्घ्येण काम् उपतिष्ठते ?
   (इ) कथमपि हि पुण्येन किं संभवति ?
   (उ) साधूनां रहस्यं कीदृशं भवति ?
   (ऋ) कीदृशी मतिः अत्र वर्णिता ?
   (ऌ) तापसीः कुतः पर्यटति ?
   (ए) पञ्चवट्यां के वसन्ति स्म ?
   (ओ) ऋषयः ब्रह्मपारायणाय कम् उपासन्ते ?
   (ऐ) देवताविशेषेण वाल्मीकिः किम् उपनीतम् ?
   (औ) अध्ययनप्रत्यूहः कः आसीत् ?

6. रिक्तस्थानानि पूरयन्ताम् —
   (अ) अयं वनदेवता फलकुसुमगर्भेण __________ मामुपतिष्ठते ।
   (इ) सतां सद्भिः सङ्गः कथमपि हि __________ भवति ।
   (उ) तत्र महान् __________ इत्येष दीर्घप्रवासः अङ्गीकृतः ।
   (ऋ) केनापि देवताविशेषेण सर्वप्रकाराद्भुतं __________ उपनीतम् ।
   (ऌ) साधूनामनुपधि विशुद्धं __________ विजयते ।

7. अधोलिखितानां पदानामर्थं कृत्वा स्वसंस्कृतवाक्येषु प्रयोगं कुरुत -

   तापसी; उपतिष्ठते;
   अशनम्; विजयते;
   अवगच्छामि; पर्यटामि;
   प्रत्यूहः; संविज्ञानम् ।

# दशावतारस्तुतिः

प्रलयपयोधिजले धृतवानसि वेदम् ।
विहितवहित्रविचित्रमखेदम् ॥
केशव धृतमीनशरीर ! जय जगदीश हरे ॥1॥

क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे ।
धरणिधरणकिणचक्रगरिष्ठे ॥
केशव धृतकच्छपरूप ! जय जगदीश हरे ॥2॥

वसति दशनशिखरे धरणी तव लग्ना ।
शशिनि कलङ्ककलेव निमग्ना ॥
केशव धृतशूकररूप ! जय जगदीश हरे ॥3॥

तव करकमलवरे नखमद्भुतशृङ्गम् ।
दलितहिरण्यकशिपुतनुभृङ्गम् ॥
केशव धृतनरहरिरूप ! जय जगदीश हरे ॥4॥

छलयसि विक्रमणे बलिमद्भुतवामन ।
पदनखनीरजनितजगपावन ॥
केशव धृतवामनरूप ! जय जगदीश हरे ॥5॥

क्षत्रियरुधिरमयं जगदपगतपापम् ।
स्नपयसि पयसि शमितभवतापम् ॥
केशव धृतभृगुपतिरूप ! जय जगदीश हरे ॥6॥

वितरसि दिक्षु रणे दिक्पतिकमनीयम् ।
दशमुखमौलिबलिं रमणीयम् ॥
केशव धृतरामशरीर ! जय जगदीश हरे ॥7॥

वहसि वपुषि विशदं वसनं जलदाभम् ।
हलहतिभीतिमिलितयमुनाभम् ।
केशव धृतहलधररूप ! जय जगदीश हरे ॥8॥

निन्दसि यज्ञविधेरहह श्रुतिजातम् ।
सदयहृदयदर्शितपशुघातम् ॥
केशव धृतबुद्धशरीर ! जय जगदीश हरे ॥9॥

म्लेच्छनिबहनिधने कलयसि करवालम् ।
धूमकेतुमिव किमपि करालम् ॥
केशव धृतकल्किशरीर ! जय जगदीश हरे ॥10॥

श्री जयदेवकवेरिदमुदितमुदारम् ।
शृणु शुभदं सुखदं भवसारम् ॥
केशव धृतदशविधरूप ! जय जगदीश हरे ॥11॥

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते ।
दैत्यान्दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते ।
म्लेच्छान्मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥12॥

## अभ्यासः

1. संन्धिः विच्छेदो वा क्रियताम् —
   क्षितिः + अतिविपुलतरे;
   जगत् + अपगतपापम्;

जगत्+निवहते;
कलङ्ककलेव;
यमुनाभम् ।

2. समासानां नामानि निर्दिश्य विग्रहः कार्यः —
प्रलयपयोधिजले;
मीनशरीरम्;
क्षत्रियरुधिरमयम्;
कलङ्ककलेव;
भवसारम् ।

3. पदपरिचयो विधेयः —
छलयसि;
विक्रमणे;
स्नपयसि;
दिक्षु;
शृणु;
पौलस्त्यम् ।

4. अधोलिखितानां पदानां अर्थान् दत्वा स्वसंस्कृतवाक्येषु प्रयोगः कर्तव्यः—
धृतवान्;
पयसि;
रमणीयम् ;
वपुषि;
करवालम् ।

5. भावं स्पष्टीकुरुत —
(अ) विहितवहित्रविचित्रमखेदम् ।
(इ) धरणि-धरणकिणचक्रगरिष्ठे ।
(उ) नखमद्भुतशृंगम् ।
(ऋ) शशिनि कलङ्ककलेव निमग्ना ।
(लृ) दशमुखमौलिबलिं रमणीयम् ।
(ए) कारुण्यमातन्वते ।
(ओ) स्नपयसि पयसि शमितभवतापम् ।

6. संस्कृतेन उत्तरं दीयताम् —
   (अ) किं गीतगोविन्दमिति काव्यस्य नाम श्रुतं भवद्भिः ?
   (इ) कोऽस्य रचयिता ?
   (उ) अस्मिन् पाठे कस्य स्तुतिः अभिमता ?
   (ऋ) हिरण्यकशिपुः कः आसीत्, तस्य विनाशः केन कृतः ?
   (लृ) यज्ञविधौ भगवता बुद्धेन किं दर्शितम् ?
   (ए) विष्णोः दश अवताराः के के सन्ति ?

प्रथमः पाठः

# अमृतस्य पन्थाः

प्रस्तुतपाठ ऋग्वेदसंहिता के पुरुषसूक्त एवं श्वेताश्वतर उपनिषद् के कतिपय मंत्रों का संकलन है। इसमें जगत् के नियन्ता परमेश्वर के स्वरूप पर प्रकाश डाला गया है।

(अ) सहस्रशीर्षा – (सहस्राणि शीर्षाणि यस्य सः) हज़ार सिरों वाला। यहां सहस्र शब्द केवल संख्या का वाचक न होकर अनेक या अनन्त का बोधक है।

(इ) दशाङ्गुलम् – (दशानाम् अङ्गुलीनां समाहारः) दश अङ्गुल परिमित। यहां दशाङ्गुल केवल संख्याबोधक न होकर अधिकता बोधक है। अर्थात् भौतिक पदार्थों की अपेक्षा ईश्वर अधिक व्यापक है।

(उ) उतामृतत्वस्येशानः – (उत+अमृतत्वस्य+ईशानः) – और भी, अमृतत्वस्य अर्थात् अमरता का स्वामी है। (ईश्+शानच्) नियन्ता, स्वामी।

(ऋ) सर्वेन्द्रियगुणाभासम् – (सर्वेषामिन्द्रियाणां गुणैरवभासते इति तम्) – सम्पूर्ण इन्द्रियों के गुणों द्वारा प्रतिभासित होने वाले। अर्थात् रूपरसगन्धस्पर्श एव शब्द से प्रतीयमान।

(लृ) आवृत्य – (आङ्+वृत्+क्त्वा (ल्यप्)) घेर कर। व्याप्त कर।

(ए) नान्य अयनाय – (अय्+ल्युट) जाने के लिए; निस्तार का कोई दूसरा मार्ग नही है।

(ओ) यथानिकायं... गूढः – (नि+चि+घञ्)–निकायः निकायमनतिक्रम्य यथानिकायम्। शरीर के अनुसार ईश्वर सब में स्थित है।

(ऐ) सुनिर्मलामिमां प्राप्तिमीशानः – सुनिर्मलां=दोषरहिताम्,
इमाम् = परमेश्वरज्ञानरूपाम्,
प्राप्तिम् = ज्ञानोपलब्धिम्,
ईशानः = नियन्ता, प्रदाता ।

अभिप्राय यह है कि सभी सांसारिक उपलब्धियां दोषयुक्त होती हैं पर आध्यात्मिक या ईश्वरीय ज्ञान सर्वथा दोषरहित होता है। उस ज्ञान का ईशान अर्थात् स्वामी या प्रदाता भी ईश्वर ही है ।

द्वितीयः पाठः

## जनमेजयस्य कृत्या

प्रस्तुत पाठ महर्षि वेदव्यास द्वारा प्रणीत महाभारत से संगृहीत है । महाभारत के श्लोक तो आपने पढ़े होंगे । यह अंश महाभारत के गद्य का उत्कृष्ट नमूना है। यहां देवशुनी सरमा द्वारा अपने पुत्र के जनमेजय के यज्ञ में चले जाने और उसके भाइयों द्वारा उसके अकारण पीटे जाने से उत्पन्न किए गए लोकापवाद के भय से मुक्ति पाने के लिए जनमेजय के प्रयास का वर्णन है।

जनमेजय – चन्द्रवंशी राजा परीक्षित का पुत्र । उसने अपने पिता को डसने वाले तक्षक से बदला लेने के लिए सर्प-यज्ञ किया था । बाद में आस्तीक ऋषि के समझाने पर उसने वह यज्ञ बन्द कर दिया था ।

कृत्या – जनापवाद, दुर्बल की हाय, अभिशाप ।

दीर्घसत्रम् – दीर्घकालीन यज्ञ ।

सारमेयः – (सरमायाः अपत्यं पुमान्) सरमा नाम की देवशुनी की सन्तान ।

रोरूयमाणः – (अतिशयेनरोदितीति)–रोता चिल्लाता हुआ ।

अभिहतः — (अभि+हन्+क्त) – पीटा गया ।
हवींषि — (हविष्, द्वि० बहु०) – हवनसामग्री ।
नावलिहे — (न+अव+लिहे, अव+लिह्) लट् उ० पु० एक०) – नहीं चाटा ।
उपास्ते — (उप+आस्, लट् प्र० पु० एक०) – सम्पादित कर रहा था ।
अदृष्टम् — अज्ञात ।
अनपकारी — कोई हानि न पहुँचाने वाला ।
देवशुन्या — देवताओं की कुतिया द्वारा ।
विषण्णः — (वि+सद्+क्त) – दुःखी, उदास ।
प्रत्येत्य — (प्रति+इ+ल्यप्) – वापस लौटकर ।
अन्विष्यमाण — (अनु+इष्+शानच्) – खोजता हुआ ।
आसांचक्रे — निवास करते थे ।

तृतीयः पाठः

# आर्यावर्तः

प्रस्तुत पाठ त्रिविक्रमभट्ट विरचित "नल-चम्पू" काव्य के प्रथम उच्छ्वास से संगृहीत है । इसमें आर्यावर्त की महिमा का वर्णन किया गया है ।

ललामभूतः — अलङ्कारभूत (अलङ्कार के समान शोभाधायक)।
नाकलोकस्य — स्वर्ग लोक का । नाक स्वर्ग का पर्याय है । न कं अकम् = दुःखं तन्नास्ति यस्मिन् लोके सः नाकलोकः तस्य = नाकलोकस्य । 'क' का अर्थ सुख होता है तथा 'अक' दुःख को कहेंगें । जहां अक अर्थात् दुःख संभव न हो वही नाक = स्वर्ग है ।

| | |
|---|---|
| प्लावितः | - (प्लु+णिच्+क्त) जल से लबालब भरा गया । |
| धाम | – धा+मनिन् । आश्रय, गृह । |
| साधुव्यवहार-रत्नानाम् | – (साधूनां ये व्यवहारास्त एव रत्नानि तेषाम्) सद्व्यवहाररूपी रत्नों का । |
| पुरुषायुषजीविन्यः | –मनुष्यों को पूर्ण आयु जीने वाली । अर्थात् 100 वर्ष तक जीने वाली । |
| चतुरगोपशोभिताः | – (चतुरैः गोपैः शोभिताः) गोपालन में निष्णात ग्वाले जिसकी शोभा बढ़ाते हैं वे गांव । (तुरगैरूपशोभिताः) – घोड़ों से सुशोभित संग्राम । |
| विपल्लवाः | – (विपदाम् लवाः) विपत्तियों के लव । छोटी-मोटी विपत्ति । (विगताः पल्लवाः येभ्यस्ते) पल्लवरहित वृक्ष । |
| सौराज्यरांञ्जत मनसः | – (सौराज्येन रञ्जितानि मनांसि येषां ते) सुन्दर राज्य व्यवस्था से प्रसन्न मन वाले । |
| गौर्यः | – पार्वती । गौरवर्ण वाली नारियां । |
| महेश्वरः | – शिव । धनीमानी । |
| सुराधिपः | – (सुराणामधिपः) देवताओं का राजा इन्द्र । (सुराम् अधिपिबति) अधिक मद्यपान करने वाला । |
| विनायकः | – गणेश जी । (विगतो नायको यस्य सः) – नायक रहित अनाथ । |
| गुरुव्यतिक्रमम् | – वृहस्पति का लंघन । गुरुजनों का अपमान । |
| मात्राकलहम् | – (मात्राणाम् कलहः) मात्रा अर्थात ह्रस्व दीर्घ मात्राओं का कलह अर्थात् विवाद । माता से कलह । |
| मित्रोदयम् | – मित्र – सूर्य का उदय । सुहृद् की उन्नति । |
| बन्धुजीवविघातम् | – (बन्धुजीवानां विघातः तम्) – बन्धु-जीव नामक पुष्पों का विनाश । (बन्धूनां जीवानां विघातः तम्) बान्धवों के जीवन का विनाश । |
| अनुक्रोशसम्पन्नैः | – (अनुक्रोशेन सम्पन्नाः तैः) दयालुओं द्वारा । कोसों से युक्त मार्ग । अनेक कोस दूर । |

# रामायणस्याविर्भावः

प्रस्तुत काव्यांश आदिकवि वाल्मीकिकृत रामायण में से उद्धृत है। व्याध के बाण से बिंधे हुए क्रौञ्च के करुण-क्रन्दन को सुनकर महर्षि वाल्मीकि के मुख से "मा निषाद – – – काममोहितम्" यह श्लोक बरबस ही प्रवाहित हो पड़ता है। शोक ने श्लोक का रूप ले लिया। 'शोक' का 'श्लोक' के साथ समीकरण हुआ और इसी प्रकार आदिकाव्य 'रामायण' का आविर्भाव हुआ।

स्वाध्यायः – (अध्ययनमध्यायः, स्वेन अध्यायः इति स्वाध्यायः) – स्वाध्याय एक पारिभाषिक पद है, जो वेद के पारायण के लिए प्रयुक्त हुआ है।

वाग्विदांवरः – (वाचं विदन्ति इति वाग्विदः तेषु वरः) – भाषाविदों में शिरोमणि।

अभ्याशे – (अभि+अश्+घञ् सप्तमी विभक्ति, एकवचन) – समीप ही।

अनपायिनम् – (न अस्ति अपायः (विश्लेषो) यस्य, तत्) – वियोगशून्य, वियोगरहित।

चारु निःस्वनम् – (चारु निःस्वनम् यस्य तत्) – (मिथुनम्) – मीठी बोली बोलने वाले (क्रौञ्च पक्षी के जोड़े को)

पापनिश्चयः – जिसका निश्चय ही पाप करने का हो अर्थात् पापात्मा।

वैरनिलयः – (वैरस्य निलयः) – शत्रुता का घर, वैर का आश्रय, महानीच।

द्विजम् – खग, पक्षी, त्रिवर्ण (जिनका उपनयन संस्कार किया जाता है)।

शाश्वतीः समाः – निरन्तर अनेक वर्षों तक (बहुकाल-पर्यन्त) समाः वर्ष का पर्याय है जो ग्रीष्म का बोधक है।

अनुव्याहरणात् – उक्ति प्रत्युक्ति के द्वारा ।

शोकः श्लोकत्वमागतः– शोक ने श्लोक का रूप ले लिया । अनुभूति ने शब्दों का रूप धारण कर लिया ।

भावितात्मनः – अपने को अभिव्यक्ति की भावना से ओतप्रोत करने पर (अर्थात अपनी शक्ति को पहचानने पर)

कृत्सनम् – (अव्यय) सम्पूर्ण ।

समाहितौ – (सम्+आ+धा+क्त) – तल्लीन हो कर, सावधानी से, समाधि की स्थिति में हो कर ।

अग्राहयत – ग्रहण कराया, याद कराया ।

रथ्यासु – वीथियों में, गलियों में, सड़कों पर ।

देववर्चसोः – (देवस्य वर्चः इव वर्चः ययोस्तयोः) – देवताओं के तेज के समान जिनका तेज है ।

मार्गविधानसम्पदा – मार्गः = रीति । विधानम् = गाने का विधान, नियम । सम्पदा = शास्त्र के अनुसार । वाल्मीकि के द्वारा बताए गए शास्त्रीय विधान के अनुसार अथवा गायन की शास्त्रीय विधि के ढंग से उन दोनों बालकों ने रामायण गायी ।

वुभूषया – (भवितुम् इच्छा वुभूषा तया) – अपने को उस रूप में ढालने के लिए; अर्थात् लव और कुश के द्वारा गाई गई रामायण के विषय को हृदयङ्गम करने के लिए ।

सक्तमनाः – (सक्तं मनः यस्य असौ) – मानसिक रूप से तैयार कर लिया ।

# मध्यमव्यायोगः (क)

पंचम एवं षष्ठ दोनों पाठ महाकवि भास द्वारा रचित 'मध्यमव्यायोग' के ही संक्षिप्त रूप हैं। यह 'व्यायोग' महाभारत की कथा पर आधारित हैं। पाण्डवों के बनवासकाल में घटोत्कच के चंगुल से एक ब्राह्मण परिवार की मुक्ति मध्यमपाण्डव भीम के द्वारा होती है तथा अन्त में हिडिम्बा से पुनर्मिलन होता है। मध्यम शब्द भीम और ब्राह्मणकुमार दोनों का बोधक है अतः इसी नाम के कारण इसे 'मध्यमव्यायोग' कहा गया है —

मध्यममुद्दिश्य कृतः व्यायोगः इति मध्यमव्यायोगः।

आर्यमिश्रान् – सम्मान्य प्रेक्षक।

अङ्ग – सूत्रधार का साथी।

विज्ञापनव्यग्रे – सूचना देने में लीन, व्यस्त।

वित्रासयति – (वि+त्रस्+णिच् लट् प्र० पु०, एकवचन) – डरा रहा है।

अचलेन्द्राणाम् कृते – विशाल पर्वतों के लिये।

पुरुषविग्रहः – मनुष्य का रूप धारण किया हुआ।

नियोगात् – आज्ञा से, नियोजित होने के कारण।

अपनीयखेदम् – अपनी कष्टात्मक भावना को एक तरफ रखकर।

विक्रोशामः – चिल्लायें।

मध्यमवर्णः – जिसके चेहरे का रंग फीका पड़ गया हो, किंकर्तव्यविमूढः।

कृतसाहसाः (कृतः साहसः यैः ते) – खतरा मोल लेने वाले।

एवं विधप्रतिभया कृतिचेष्टितानाम् — इस प्रकार दूसरों को सताने की चेष्टा करने वालों को।

व्यपाश्रयिष्ये – (वि+अप+आ+श्रि लृट् उ० पु० एकवचन) – विचलित करूं, उसे उसके मन्तव्य से हटाऊं।

उपवासनिसर्गार्थम् – व्रत की पारणा (व्रत की पूर्णता पर किये जाने वाले आहार) के लिए।

चारित्रशालिन्या – चरित्र ही जिसका शील अर्थात् स्वभाव है, उसके संग ।

राक्षसापसद – नीच राक्षस ।

श्रुतवान् – (श्रुत्+मतुप्) – ज्ञानी ।

यथार्थितः – जैसा कि आपसे कहा गया है ।

परिणामेन – वृद्धावस्था के कारण ।

होष्यामि – (हु+लृट् उ० पु०, एकवचन) – हवन कर दूंगा । आहुति दे दूंगा ।

विधिसंस्कृतम् – विधिपूर्वक संस्कार किया हुआ ।

गृहीतफलेन – जिससे (बालक रूपी फल) ग्रहण कर लिया गया है।

गुरुवृत्तिमनुस्मरन् – अपने से बड़ों के आचरण का अनुसरण करते हुए।

ब्रह्मवादिभिः – वैदिक विद्वानों ने।

तार्यते – उसका उद्धार किया जाता है ।

बन्धुस्नेहाद्धि महतःकायस्नेहस्तु-दुर्लभः – महापुरुष को बन्धुओं के प्रति स्नेह की अपेक्षा अपने शरीर का स्नेह प्रायः नहीं होता है अर्थात् महापुरुष अपने शरीर के साथ लगाव नहीं रखते ।

प्रकल्पितपरलोकस्य – उसका जो मर जाने को प्रस्तुत हो ।

दृढव्यवसायिन् – अति साहसी ।

परिमुषिताः – लुट गये ।

त्रिश्रृंङ्गः – तीन चोटियों वाला, जिसके तीन शिखर हैं ।

मनोज्ञः – सुदर्शन, अच्छा दीखने वाला ।

धन्योऽस्मि – दुर्लभः ।

अन्वयः – (अहम्) – धन्यः, अस्मि, यत् (मया० स्वैः प्राणैः गुरुप्राणाः, परिरक्षिताः, हि महतः, बन्धुस्नेहात् कायस्नेहः, दुर्लभः भवति ।
यहां 'महत' शब्द का अर्थ है अतिअधिकर ।

# मध्यमव्यायोगः (ख)

| | |
|---|---|
| दृष्टम् | – (दृश्+क्त) समझा, समझ गया । |
| अतिराक्षसम् | – (राक्षसमतिक्रम्य) अतिक्रूर, राक्षसों को भी मात करने वाला । |
| मध्यमोऽहमवध्यानाम् | – अवध्यानां, हन्तुमशक्यानां मध्यमः एकः – मैं उन लोगों में से एक हूं जिनको मारना अत्यन्त कठिन है। |
| उत्सिक्तानां-च मध्यमः | – बलमदमत्तानां मध्यमः श्रेष्ठः – उन मतवालों में सबसे बढ़कर हूँ, जिन्हें किसी की परवाह नहीं होती, अर्थात सर्वथा निर्भीक । |
| मध्यमो ऽ हं क्षितौ दुःखसहनात् | – मध्यमः निर्विण्णः तटस्थः जीवनादुदासीनश्चास्मि । राज्य से निर्वासित एवं अपमानजन्य – दुःख सहन करने से जीवन से उदासीन हो गया हूँ, जिसे जीवन के प्रति कोई भी मोह नहीं है । |
| सजलजलदगात्र | – जल से भरे हुए मेघ के समान जिसके शरीर का रंग है, अर्थात् जलयुक्त बादल काला होता है अतः काला शरीर वाला । |
| निग्रहिष्यामि | – दण्ड दूंगा । |
| विश्रब्धम् | – (वि+स्रम्भ्+क्त) निश्चयपूर्वक । |
| दैवतम् | – (देवता+अण्) देवता का भी आराध्य। |
| वीतकारुण्यम् | – वीतं कारुण्यम् यस्य तत् – करुणाभाव से रहित । निर्दय, कठोर, जिसके मन में दया शेष नहीं है । |
| विनिमातुम् | – (वि+नि+मी+तुमुन्) – बदले में देना । |
| प्रत्यभिजानीते | – (प्रति+अभि+ज्ञा, लट् लकार) पहचानते हैं । |
| गुणागुणज्ञः | – गुण और दोष को जानकर । |
| शक्तिधर. | – शक्ति धारण करने वाले स्वामी कार्तिकेय । |

वृकोदरः – (वृकस्य उदरम् इव उदरम् यस्य सः) – भीमसेन।

स्थविरः – (स्था+किरच्) वृद्ध, बूढ़ा आदमी।

उन्मत्तक – पगले! (हिडिम्बा वात्सल्यभाव से घटोत्कच को ऐसा सम्बोधित करती है)।

धार्तराष्ट्रवनदवाग्निः – (धृतराष्ट्रस्य अपत्यानि पुमांसः धार्तराष्ट्राः त एव वनानि इति धार्तराष्ट्रवनानि तेषां (धार्तराष्ट्र-वनानां) तेषु वा दवाग्निः (वनाग्निः) इति। धृतराष्ट्र के पुत्र लोग ही वन हैं, उसे जलाने के लिए घटोत्कच ही 'दावाग्नि' रूप है।

## सप्तमः पाठः

# राज्यादर्शः

प्रस्तुत काव्यांश महाकवि कालिदास की विश्रुत रचना 'रघुवंश' नामक महाकाव्य से उद्धृत है। रघुवंश के प्रथम सर्ग का प्रारम्भ वैवस्वत मनु के वंशज राजा दिलीप के उदात्त गुणों के वर्णन से होता है। प्रस्तुत अंश में राजा दिलीप द्वारा आचरित राज्य के आदर्शों का सुन्दर वर्णन है।

वैवस्वतो मनुः– (विवस्वतः अपत्यं पुमान् इति वैवस्वतः) – सूर्य के पुत्र। शास्त्रों में एक कल्प में 14 मनु के होने का वर्णन मिलता है। यहां पर सातवें मनु से तात्पर्य 'सत्यव्रत' से है। यही मनु जो मानवीय सृष्टि के विस्तारक माने जाते हैं अयोध्या के सर्वप्रथम सम्राट् हुए।

मनीषिणाम् – धीर, (विद्वान्) पुरुषों में।

महीक्षिताम् – जो पृथ्वी पर राज्य करते हैं उनमें। अर्थात् राजाओं (का) में।

प्रणवः – ओम्

छन्दसाम् – वेदों में (का) – वेद मन्त्रों के गायन से पूर्व और गायन के पश्चात् 'ओम्' का उच्चारण अवश्य किया जाता है । 'ओम्' में निहित तीन अक्षर त्रिमूर्ति (तीन देवताओं) को इङ्गित करता है – अ = विष्णु, उ = शिव तथा म् = ब्रह्मा, जो क्रमशः सृष्टि के पालन, संहार, निर्माणकर्ता हैं ।

शुद्धिमत्तरः – अतिशयेन शुद्धिमत्तरः ( शुद्धिमत्+तरप्) अत्यन्त पवित्र । जिस प्रकार क्षीरनिधि की अपेक्षा चन्द्रमा अधिक पवित्र था इसी प्रकार राजा दिलीप अपने शुद्ध वंश में सभी राजाओं से पवित्र एवं श्रेष्ठ था ।

भूत्यर्थम् – समृद्धि के लिए, कल्याण के निमित्त ।

बलिम् – (षष्ठांश रूप कर ), कर (आय का छटा भाग कर के रूप में) ग्रहण किया जाता था ।

सेनापरिच्छदः – सेना उपकरण मात्र ही थी । परिच्छदः – ठाट-बाट की सामग्री । शोभाधायक वस्तु ।

आतता – आरोपिता (आ+तन्+क्त+टाप्)

संवृतमन्त्रस्य – संवृतः (गुप्तः) मंत्रः (निर्णयः) यस्य, तस्य बहुव्रीहिः– जिसके निर्णय सर्वथा गुप्त रहते थे ।

गूढाकारेङ्गितस्य – आकारश्च इङ्गितं चेति आकारेङ्गिते –– गूढे आकारेङ्गिते यस्य तस्य –– जिसकी आकृति एवं चेष्टायें इतनी गूढ अर्थात् रहस्यमय थीं कि उनसे कुछ समझा नहीं जा सकता था ।

फलानुमेयाः – (फलैः अनुमेयाः) – परिणाम से ही जिसके होने का अनुमान किया जाता था ।

प्रारम्भाः – योजना, उपक्रम ।

प्राक्तनाः – पूर्व जन्म के (संस्कार) ।

जुगोप – रक्षा की – (गुप्+लिट्+प्रपु० एकवचन) ।

अगृध्नुः – निर्लोभी (न ग्रहणशीलः)

परिणेतुः – (परि+नी+तृच् – षष्ठी, एकवचन) – वह जिसने कि विवाह किया था ।

सम्पद्विनिमयेन – अपनी सम्पत्ति की अदला-बदली से, अपनी सम्पत्ति के विनिमय से। (यज्ञ से वर्षा, वर्षा से धान्य, धान्य से कर, और कर से यज्ञ)।

न अनुययुः – अनुकरण नहीं किया।

व्यावृत्ता – निवृत्ता (हट कर)।

श्रुतौ – शास्त्रों में; अथवा केवल शब्द मात्र में ही।

संमतः – (सम्+मन्+क्त) आदर करता था।

आर्तस्य – रोगी का।

विनयाधानात् – विनय से तात्पर्य है – विनम्रता, अनुशासन, आदर्श। परन्तु प्रस्तुत प्रसंग में 'शिक्षा' अर्थ में लिया गया है। आधान= करण (करना), (देना) अर्थात् – सन्मार्ग में प्रवर्त्तन – प्रजा को शिक्षा प्रदान करने के कारण।

अष्टमः पाठः

## चन्द्रोदयः

संस्कृत के महान् गद्यकार बाणभट्ट की प्रसिद्ध कृति कादम्बरी से संगृहीत प्रस्तुत पाठ में चन्द्रोदय का बड़ा सजीव वर्णन किया गया है।

समयेन – समयः परिपाटी, तेन (और) इस प्रकार या इसी समय।

परिणतः – (परि+नम्+क्त) झुक गया, ढल गया।

अनेन च . . . दिवसः– और इस प्रकार दिन ढल गया।

तनिमानममजत् – क्षीण हो गया।

पारावत . . . रागः(पारावतस्य पादौ पारावतपादौ तयोः पाटलमिव रागः यस्य सः) – कबूतर के पैर जैसा लाल।

| | |
|---|---|
| अवालम्बत | – नीचे लटक गया । |
| मरीचिमालिनि | – (माला अस्ति अस्य इति माली मरीचीनां माली मरीचिमाली तस्मिन्) – जो किरणों से घिरा हुआ हो अर्थात् सूर्य । |
| विद्रुमलतेव | – मूंगे की लता की भाँति । |
| लोहिततारका | – लाल–लाल तारों से युक्त । |
| सिद्धकन्याभि-र्विक्षिप्तम् | – देवताओं की कन्याओं द्वारा बिखेरे गये । (सिद्ध-देवयोनि विशेष) |
| कुसुमशवलमिव | – फूलों के गुच्छे की भाँति । |
| वियदराजत | – आकाश जगमगा उठा । |
| विप्रकीर्णौ | – उछाले हुए । |
| अगलत् | – धुल गया, समाप्त हो गया । |
| सन्ध्यारागः | – सन्ध्या की लालिमा । |
| विभावरी | – रात्रि । |
| कृष्णाजिनमिव | – काले मृग चर्म की भाँतिं । |
| अमृतदीधितिः | – चन्द्रमा (जिसकी किरणों में अमृत होता है) । |
| अचिरोद्वाहिता | – नवविवाहिता । |
| अवगुण्ठनात् | – घूंघट से । |
| त्र्यम्बकोत्तमाङ्गात् | – भगवान शिव के सिर से । |
| हिमकरसरसि | – चन्द्र रुपी तालाव में । |
| हिमस्रुति | – (हिमं शैत्यं स्रवति इति तस्मिंन्) – जिससे शीतलता बरसती हो । |

### नवमः पाठः

# ऋतुचर्या

प्रस्तुत पाठ चरकसंहिता के अशीति अध्याय का ही संक्षेप है। इसमें प्रत्येक ऋतु के खान-पान तथा दिनचर्या का निरूपण किया गया है ।

संवत्सरः — संवसन्ति ऋतुवोऽत्रः। छहों ऋतुओं का निवास। एक वर्ष

विसर्गः — (वि+सृज्+घञ्) त्याग। छोड़ना। विसर्जन।

अव्याहतबलः — (अव्याहतं बलं यस्य सः) शक्तिसम्पन्न।

सौम्यः — (सोमस्य भावः) सरल, मृदु।

आग्नेयम् — अग्निगुण प्रधान।

आददानः — (आङ्+दा+शानच्) ग्रहण करता हुआ।

माहेन्द्रसलिलम् — वर्षा का पानी। इन्द्र को वर्षा का स्वामी होने से

प्रशान्तसन्तापे — प्रशान्तः सन्तापो यस्मिन् तस्मिन्) शान्त ताप वाला। ताप के दूर हो जाने पर।

शीतानिलस्पर्शसंरुद्धः — (शीतस्य अनिलस्य स्पर्शेन संरुद्धः) – ठंडे वायु के स्पर्श से रुका हुआ।

मेघवातवर्षाभिहतप्रतापे — (मेघाश्च वाताश्च वर्षाश्च ताभिरभिहतः प्रतापः यस्मिन् तस्मिन्) – बादल वायु वर्षा के द्वारा शान्त ताप वाले।

उपचीयते — (उप+चि) – संचित होता है।

इक्षुविकृतिः — गन्ने के विकार। मिठाइयां।

अभ्यङ्गोत्सादनम् — (अभ्यङ्गश्च उत्सादनश्च) तैल मर्दन एवं उबटन।

जेन्ताकम् — उष्ण भूमिग्रह।

अभ्यस्यतः — (अभि+अस्+शतृ) – सेवन करने वाले को।

वातलानि — (वातं लान्तीति) वायुवर्धक उड़द आदि।

निचित — (नि+चि+क्त) एकत्र हुआ।

श्लेष्मा — कफ।

गुर्वम्लस्निग्धमधुरं — (गुरु च अम्लं च स्निग्धं च मधुरं च) – भारी, खट्टे, चिकने तथा मधुर पदार्थ।

कवलग्रहम् — नीम आदि के कोपल खाना।

ईरितः — प्रेरित।

पेपीयते — पुनः पुनः अतिशयेन वा पीयते । बारम्बार पिया जाता है ।

शाल्यन्नम् — साठी चावल या चावल मात्र ।

न सीदति — क्षीण या दुर्बल नहीं होता ।

सुप्रकांक्षितै — इच्छा के अनुसार ।

तिक्तस्य सर्पिषः पानम् — मिर्च की छोंक से युक्त घी ।

विरेकः — (वि+रिच्+घञ्) वमन । जुलाब । मलाशय का साफ करना ।

रक्तमोक्षणम् — रक्त निकालना । अशुद्ध संचित रक्त को शिरा काट कर निकालना ।

धाराधरात्यये — (धारा+धर+अत्यये धाराणां धराः तेषां अत्यये) बादलों के व्यतीत हो जाने पर ।

प्रदोषे — रात्रि के आरम्भ में । रात्रि के आरम्भ का समय प्रदोष कहा जाता है ।

ऋतावृतौ — ऋतौ च ऋतौ च । प्रत्येक ऋतु में ।

शौचविधिम् — स्नानादि विधि ।

शीलयेत् — सेवन करना चाहिए ।

## दशमः पाठः

# पद्यपीयूषम्

प्रस्तुत पाठ मे संकलित पद्य नीतिविषयक सुभाषित हैं ।

व्यसनम् — (वि+अस्+ल्युट्) आदत, जिसके बिना रहा न जाय ।

स्वयोषिति — अपनी पत्नी के प्रति ।

चक्रिणि — (चक्रम् अस्ति अस्य, चक्र+इन्) — सुदर्शन चक्रधारी विष्णु ।

संसर्गमुक्तिः खले— कुसंगति से छुटकारा पाने की भावना ।

पर्युषितम् — (परि+वस्+क्त) बासी ।

पूषा — सूर्य ।

छन्दोविना गीयते — छन्दोबद्ध रचना से रहित गान ।

भ्रष्टश्रियम् — राज्यच्युत ।

अभिरमते — प्रेम करता है । मानता है ।

वनान्त — वन का एक भाग ।

सङ्गमेन — स्त्रीपुरुष सहवास से ।

ईक्षणीय — (ईक्ष्+अनीयर्) देखने लायक, सुरुप ।

प्राप्तेष्टः — इष्टदेव के रूप में प्राप्त ।

करिकेतनः — करिः—गजः (गजचर्म) केतनं चिह्नं यस्य सः) गजचर्मधारी शिव ।

कल्पभूमीरुहैः — भूम्यां रुहन्तीति भूमिरुहाः = वृक्षाः कल्पभूमीरुहैः कल्पवृक्षैः ।

निःस्वः — अकिञ्चंन, जिसके पास कुछ भी न हो ।

चक्रेशताम् — चक्रवर्ती राजा बनना ।

आशावधिम् — आशा की पराकाष्ठा, चरम सीमा, परिसमाप्ति ।

स्वच्छतया — अन्तःकरण की निर्मलता से, निष्कपटता से, निश्छलता से ।

समैः — समानभाव से । अपने बराबर समझने से ।

कथाभिः — कहानियों के द्वारा ।

शीलेन — सदाचार, सत्स्वभाव ।

प्रसादः — सरलता, आडम्बरहीनता ।

स्मृतिः — कृतज्ञता, उपकार को याद रखना ।

सुमहिमा — सत्कीर्ति, सुयश ।

## एकादशः पाठः

# भरतःसर्वदमनः

प्रस्तुत पाठ कविकुलगुरु कालिदास की सर्वोत्तम नाट्यकृति 'अभिज्ञान-शाकुन्तल' के सप्तम अंक से उद्धृत है। इसमें शकुन्तला के पुत्र सर्वदमन की बाल-सुलभ चपलता का वर्णन किया गया है तथा उसी के द्वारा दुष्यन्त और शकुन्तला का पुनर्मिलन होता है।

निमित्तम् – (नि+मिद्+क्त) – शुभ संकेत। शकुन।

पूर्वावधीरितम् – (पूर्व+अव+धृ+णिच्+क्त) जिसका पहले तिरस्कार हो चुका हो।

अभूमिरियमविनयस्य – यह स्थान धृष्टता के लिए अनुपयुक्त है। यहां धृष्टता संभव नहीं।

अनुबध्यमानः – (अनु+बध्+शानच्) रोका जाता हुआ।

अबालसत्वः – (अबालवत् सत्वं यस्य सः) – वह बालक जिसमें बड़ों की सी क्षमता हो।

अपत्यनिर्विशेषाणि – सन्तान के समान।

विप्रकरोषि – दुःखी कर रहे हो। सता रहे हो।

लङ्घयति – निगलने जा रही है।

तमस्योपहर – इसे वही (मिट्टी का मोर) लाकर दो। यह अस्य में षष्ठी चतुर्थी के अर्थ में प्रयुक्त है।

कुलाङ्कुरेण – वंश का अङ्कुर।

निर्वृत्तिम् – (निर्+वृत्+क्तिन्) आनन्द।

प्ररूढः – (प्र+रुह्+क्त) उत्पन्न हुआ है।

व्यपदेशः – नाम, संज्ञा।

एकान्वयः – एकवंश वाला, सगोत्र।

शकुन्तलावण्यम् – पक्षी का सौन्दर्य, इस शब्द में शकुन्तला नाम का निर्देश हुआ है।

द्वादशः पाठः

# पितृवात्सल्यम्

महाकवि बाण के 'हर्षचरित' से संकलित इस पाठ में महाराज प्रभाकरवर्धन के हर्षवर्धन के प्रति स्नेह का अत्यन्त मार्मिक वर्णन किया गया है ।

| | |
|---|---|
| अवनिपतिः | – राजा (प्रभाकरवर्धन) । |
| सुतराम् | – अत्यन्त । |
| प्रसार्य | – (प्र+सृ+ल्यप्) फैलाकर । |
| आह्वयन् | – (आ+ह्वे+शतृ) – बुलाते हुए । |
| ससंभ्रममुपसृत्य | – लड़खड़ाते हुए पास जाकर । |
| निवेश्य | – (नि+विश्+ल्यप्) चिपकाकर |
| अजस्रास्रविस्राविणी | – (अजस्रं – निरन्तरम्, अस्राणि – अश्रूणि विस्रवन्तीति) – जिनसे आसुँओ की धारा अविरल बह रही है । |
| विस्मृतज्वरसंज्वरः | – जिसने बुखार के आवेग को भुला दिया है । |
| आलिलिङ्ग | – हृदय से लगाये रखा । |
| वेपथुमता | – कांपते हुए शरीर से । (वेपथु+मतुप्) |
| क्षयक्षामकण्ठः | – (क्षयेन क्षामः कण्ठः यस्य सः) गला सूख जाने से । |
| कृच्छ्रादिव | – बड़ी कठिनाई से । |
| सातिभिः | – कुटुम्बी, सगोत्र, बिरादरी वाले । (सा+क्तिन्) |
| संदुधुक्षे | – प्रदीप्त हो उठा । |
| कतिचित् | – कुछ । |
| कवलान् | – नेवाले, कौर । |

साश्रुः – (अश्रैः सहितः) – आँखों में आँसू भर कर ।

क्षतधृतिः – (क्षता धृतिः यस्य सः) – धैर्य खोकर ।

दूयमानहृदयः –(दूयमानं हृदयं यस्य सः)– टूटे हुए हृदय से ।

अनैषीत् – (नी+लुङ् प्र० एक०) – बिताया ।

## त्रयोदशः पाठः

# सत्सङ्गमः

प्रस्तुत पाठ सुप्रसिद्ध नाटककार भवभूतिकृत 'उत्तररामचरितम्' के द्वितीय अंक का विषकम्भक है । कुश और लव की उत्पत्ति के पश्चात् वाल्मीकि के आश्रम में अध्ययन में बाधा पाने के कारण आत्रेयी नामक छात्रा अगस्त्य के आश्रम में जा रही है । बीच में पंचवटी में उसकी भेंट वासन्ती नामक वनदेवता से हो जाती है । प्रस्तुत पाठ वासन्ती और आत्रेयी का वार्तालाप है ।

नेपथ्ये – पर्दे के पीछे से ।

तपोधनायाः – (तपः एव धनं यस्याः तस्याः) – छात्रा, क्योंकि अध्ययन को ही तप माना गया है – छात्राणामध्ययनं तपः ।

वनदेवता – जंगल की अधिष्ठात्री देवी । उत्तररामचरित में उसे वासन्ती के नाम से एक पात्र की भूमिका दी गई है, जो वनवास के काल में सीता की सखी है तथा राम के व्यक्तित्व से पूर्ण परिचित एवं प्रभावित है ।

उपतिष्ठते – पूजा करती है । (अतिथिः किल पूजार्हः) ।

विकीर्य – (वि+कॄ+ल्यप्) – बिखेर कर ।

अशनम् – (अश्+ल्युट) – भोजन ।

वृत्तिः — व्यवहार ।

विनयमधुरः — विनम्रता के कारण मधुर न कि स्वार्थ-साधन के लिए (विनयेन मधुरः) ।

प्रकृत्या — स्वाभाविक रूप्न से ।

कल्याणी मतिः — कल्याण अर्थात हित में तत्पर बुद्धि, कल्याणकारिणी बुद्धि ।

अनवगीतः — दोष रहित (निर्दोष – परिचय) । जो दोष के कारण बार-बार कहा जाए वह अवगीत है, जिसका अर्थ होता है निन्दित या गर्हित ।

अविपर्यासितरसं — (नविपर्यासितः परिवर्तितः रसः (भावः) यस्य तत्)– परिवर्तित । जिसके विषय में प्रत्यक्ष और परोक्ष में भाव बदलते नहीं ।

रहस्यम् — (रहसि भवम्) – चरित्र – क्योंकि इसका वास्तविक स्वरूप वह होता है जो एकान्त में पाया जाता है ।

अनुपधि — कपट रहित (उपधि छल कपट को कहते हैं ) ।

विजयते — (सर्वोत्कर्षेण वर्तते ) । – संसार में सबसे उत्कृष्ट होता है ।

कां पुनरत्रभवतीमवगच्छामि — आपका परिचय क्या है ? (अर्थात् आप कौन हैं ?)

दण्डकारण्यप्रचारः — दण्डकारण्य में विचरण ।

उद्गीथविदः — उद्गीत ही उद्गीथ है ।
(उद्गीथं विदन्ति इति उद्गीथविदः) ।
उद्गीथः – सामवेद का स्वर । प्रस्तुत प्रसंग में उद्गीथ से तात्पर्य है – वेदविद्या जो स्वर पूर्वक गायी जाती है ।

निगमान्तविद्या — वेदान्त विद्या । निगम वेदों को कहते हैं, उनका अन्त अर्थात् सार या तात्पर्य ही निगमान्त विद्या है जिसका प्रचलित नाम वेदान्त है ।

प्राचेतसम् — वाल्मीकिम् (प्रचेतस् के दशमम पुत्र) वाल्मीकि को ।
(प्रचेतसः अपत्यम् पुमान् – प्राचेतसः ) ।

ब्रह्मपारायणाय – ब्रह्मणः पारायणम्। तस्मै– षष्ठी तत्पुरुष । ब्रह्मज्ञान के लिए, वेद के पारायण के लिए ।

दीर्घप्रवासप्रयासः – लम्बी यात्रा के लिए प्रयास (कष्ट सहन) करना ।

अध्ययनप्रत्यूहः – अध्ययन में बाधा ।

स्तन्यत्यागमात्रके – माता के दूध को जिसने अभी-अभी छोड़ा है ।

संविज्ञानम् – विशेष पहचान ।

धात्रीकर्मतः – धात्री के कर्म से (लेकर उनका पालन-पोषण करना) ।

कल्पेनोपनीय – विधिपूर्वक (कल्पेन) कल्प शास्त्रीय विधि को कहते हैं । उपनयन संस्कार करके ।

अतिप्रदीप्तप्रज्ञा-मेधाभ्याम् – (प्रज्ञा च मेधा च इति प्रज्ञामेधे – अतिप्रदीप्ते प्रज्ञामेधे ययोः, ताभ्याम्) – जिनकी ग्रहण और धारण शक्ति बहुत तीक्ष्ण है ।

विश्रान्तास्मि – मैंने सुस्ता लिया । मेरी थकावट दूर हो गयी ।

## चतुर्दशः पाठः

# दशावतारस्तुतिः

महांकवि जयदेव के अनूठे गीतिकाव्य 'गीतगोविन्द' से संगृहीत इस पाठ में भगवान् विष्णु के दश अवतारों के कार्यों का वर्णन किया गया है ।

वहित्र – नौका, पोत ।

किण – घाव का निशान ।

स्नपयसि – स्नान कराते हो ।

भृगुपति – परशुराम ।

दिवपतिकमनीयम् – इन्द्र द्वारा अभिवांछित ।

दशमुखमौलिबलिम् – दशानन के सिरों की बलि अर्थात रावण का पूर्ण विनाश ।

वपुषि – शरीर में ।

जलदाभम् – बादल जैसे रंगों वाला ।

हलहति. . .यमुनाभम् – बलराम द्वारा हल के प्रहार से भयभीत यमुना मानों उनके शरीर से स्वयं लिपट गई है ।

हलधर – (हलं धरतीति) – जिनका आयुध हल था अर्थात् बलराम ।

अहह – मन को दुखाने वाला

श्रुतिजातम् – वैदिक परम्परानुसार सम्पादित ।

पशुघातम् – पशुओं की हत्या ।

म्लेच्छनिवहनिधने – (म्लेच्छानां निवहः = समूहः । तस्य निधने) – असभ्यों, दुष्टों अथवा दुराचारियों के विनाश के लिए ।

कलयसि – चलाते हो ।

करवालम् –तलवार ।

करालम् – कठोर ।

निवहते – संचालन करने वाले के लिए ।

भूगोलमुद्विभ्रते – पृथ्वी का उद्धार करने वाले के लिए।

दारयते – (दृ विदारणे) – संहार करने वाले के लिए ।

कारुण्यमातन्वते – दया की भावना फैलाने वाले के लिए ।

विशेष - इस पाठ के अन्तिम श्लोक के 'उद्धरते' 'निवहते' आदि शतृ प्रत्यान्त कृदन्त पद हैं और इनमें चतुर्थी विभक्ति का प्रयोग किया गया है ।